प्रसाधनप्रमाणाभ्यां यथेदमस्मिन् सति । सत्स्वपि तदन्येषु समर्थेषु तद्धेतुषु तदभावे न[3] भवतीति । एवं ह्यस्यासन्दिग्धं तत्कार्यत्वं समर्थितं

---

(2a3)त्यादि । इदन्धूमादिसंज्ञकं कार्यमस्मिन्दहने सति भवति । उपलब्धिलक्षणप्राप्तं सदनुपलब्धं प्रागिति वाक्यशेषः कार्यः । अन्यथा दहनस्य तत्र धूमे व्यापार एव[2] न कथितः स्यात् दहनसन्निधानात्प्रागप्येतदासीदित्याशङ्कासम्भवात् । यथोक्तानुपलम्भग्रहणे तु नैवेयमवतरति । अत एव च प्रमाणविनिश्चि[? श्च]यादावप्येवमेवा[3]भिहितमिति । अनेन च प्रत्यक्षप्रमाणव्यापार उक्तः । तथाहि अस्मिन्सतीदं भवतीति प्रत्यक्षेणैतद् गम्यते । सम्प्रत्यनुपलम्भस्य व्यापारं निर्दिदिक्षु[4]राह । सत्स्वपी(2a3)त्यादि । तस्माद्दहनादन्येषु विद्यमानेष्वपि । तथा तस्य धूमस्य हेतुष्विन्धनानिलादिषु समर्थेषु सत्स्वपीति वर्त्तते । चकारश्चात्र लुप्त[5]निर्दिष्टः प्रतिपत्तव्यः समर्थेषु चेति । तस्य दहनस्याभावे न भवति । इदमित्यधिकृतं । इति एवमित्यस्यार्थे वर्त्तते व्यवच्छेदे वा । तदनेन गवाश्वादी[6]नां तद्देशकालस(न्)निहितानामपि धूमजननं प्रति कारणत्वन्निसि[? षि]द्धं । यतो यदि ते गवाश्वादयस्तस्य कारणम्भवेयुस्तदा व्यतीतेप्यग्नौ तेषां सन्निहितत्वाद् धूमो[7]त्पत्तिप्रसङ्गः । इन्धनादिकारणान्तरापेक्षास्ते तस्य जनका भवन्ति ततोयमप्रसङ्ग इति चेत् । यद्येवं तेपि तत्र सन्निहिता एवेति न व्यावर्त्तते प्रसङ्ग इति द[8]हनमपि सहकारिणमपेक्ष्य तं जनयन्ति ततो न युक्तमिदमिति चेत् । नन्वेवं सत्यायातन्दहनस्य धूमोत्पत्तिं प्रति कारणत्वं । तत्किमिदमुच्यते पूर्व्वापरव्याहत-
112a तङ्ग[9]वाश्वादय एव तस्य कारणन्न दहन इति । अस्तु तर्हि तस्यापि दहनस्य कारणत्वङ्गवाश्वादीनामपीति चेत् । न युक्तमेतत् । तत्र व्यतिरेकगतेर्दुर्घटत्वात् । तथा हव्यप[1]गतेष्वपि गवादिषु सति च दहने तत्रेन्धनादिकलापे भवत्येव हुतभुग्केतोरुत्पत्तिः । यतः कारणप्रबन्धङ्कार्यप्रबन्धञ्चाश्रित्य हेतुफलभावश्चिन्त्यते भावानाङ्का[2]रणप्रबन्धपूर्व्वः कार्यप्रबन्ध इति । तत्तु क्षणभेदं । नहि समासादितज्ञानातिशयानामयं पूर्व्वः क्षणोऽयमुत्तर इति विशेषावलम्बि ज्ञानमुदेति (।) अर्व्वाग्दर्शि[3]भिश्चाधिकृत्य प्रमाणलक्षणं प्रणयितं कृपावद्भिः । यथोक्तं सांव्यवहारिकस्यैतत् प्रमाणस्य रूपमुक्तमत्रापि परे विमूढा विसम्वादयन्ति लो[4]कमिति । वासगृहादिषु तर्हि दहनाभावेपि धूमसद्भावाद्व्यभिचार इति चेत् । भूतस्यापि दहनप्रबन्धपूर्व्वकत्वमस्त्येव । साक्षात्पारम्प[5]र्यकृतस्तु विशेषः । अवयन्ति च विच्छिन्नाविच्छिन्नदर्शनप्रबन्धयोर्द्धूमप्रबन्धयोर्वासगृहादिरसवतीप्रदेशादिभाविनोः स्फुटमेव भेदम्विचित्र[6]भावस्वभावविवेकाभ्यासबलोपजातविदग्ध-

भवति। अन्यथा केवलं तदभावे न भवतीत्युपदर्शनेऽन्यस्यापि (।) तत्राभावे सन्दिग्धमस्य सामर्थ्यमन्यत्तत्र समर्थन्तदभावात्त[4]न्न भूतं। एतन्निवृत्तौ

---

बुद्धय इति भेदेनाप्यनुमानमविरुद्धमत एव देशकालाद्यपेक्षमनुमानं कार्यहेतौ विरुद्धकार्योपलम्भे चोक्तं।[7]

इष्टम्विरुद्धकार्येपि देशकालाद्यपेक्षणं।
अन्यथा व्यभिचारि स्याद् गत्येवासीत (?) साधनं (॥२) इति।

अथापि कश्चिद्विविधभावभेदप्रविचयचातुर्यातिशयशलाकोन्मी[8]लितप्रज्ञाचक्षुष्ट्वादयं ज्वलनजनितो धूमोऽयं धूमजनित इति विवेचयति। तथापि न सुतरां व्यभिचारः। तथाहि नाग्निजन्यो धूमो धूमाद् भवति निर्हेतुकत्वप्रसङ्गात्।[9] 11b
तथा च यदुक्तं (।)

अतश्चानग्नितो धूमो यदि धूमस्य सम्भवः।
शक्रमूर्धनस्तथा स्त[?त]स्य केन वार्येत सम्भवः (॥३) इत्यादि

तदसारमित्यप्युपेक्षते (।) तस्मान्न तेषां गवाश्वादीनां तत्र[1]कारणत्त्वमस्तीति निश्चयः समाधीयतां। अतश्च दहन एव तस्य कारणं नाश्वादय इति स्थितमेतत्। तथा च दहनस्य कारणत्वं योजितमन्वयव्यतिरेकाभ्यां यथो[2]क्तप्रकाराभ्यामेवमिधनादिसामग्र्याः सर्वस्याः कारणं योजयितव्यं। यदि वैकवाक्यतयैव व्याख्यायते। सत्स्वपि तस्माद्दहनादन्येषु समर्थेषु तद्धेतुष्वि[3]धनादिष्वस्याभावे न भवतीति। गवाश्वादीनां त्वहेतुत्त्वम्व्यतिरेकाभावतया यथोक्तेन विधिना बोद्धव्यं।

ननु चैतदेव युक्तम्वक्तुं तदभावेन भवती[4]त्यथ किमर्थं सत्स्वपि तदन्येषु समर्थेषु तद्धेतुष्वित्युच्यत इति चेदाह। एवं ही (2a4) त्यादि। यस्मादेवं सत्स्वपीत्यादिनाऽभिधीयमानोऽस्य धूमस्य तत्कार्य[5]त्वमग्निकार्यत्त्वं समर्थितं निश्चितमसन्दिग्धम्भवति। अन्यथा यद्येवं नोपदर्श्यते। केवलं तदभावेन भवतीत्युपदर्श्यते तदा तदभावेन भवतीत्युप[6]दर्शने क्रियमाणेन्यस्यापि तु गवाश्वादेरिन्धनादेश्च तत्राग्निशून्यभूभागेऽभावे सति सन्दिग्धमस्याग्नेः सामर्थ्यम्भवतीति कुतः कारणभावनिश्चय इति समुदाया[7]र्थः। तत एवाह (।) सत्सु हि समर्थेषु तद्धेतुषु (2a3) कार्यानुत्पत्तिः कारणान्तरविकल्पं सूचयतीति सन्दिग्धमस्यान्यथा सामर्थ्यमित्येतदेवान्यत्तत्रेत्या(2a4)दिना सूचयति। तत्र धू[8]माश्वकार्येऽन्यदेवाश्वादि। यदिन्धनादिसमर्थन्तदभावात्तन्न भूतन्दहनशून्यदेशे। अस्य स्वभावात्तन्न जातमिति कुतोयं निश्चय इत्यर्थः।

पुनर्निवृत्तिर्यदृच्छासंवादो मातृविवाहो हि तद्देशजन्मनः पिण्डखर्जूरस्य देशान्तरेषु मातृविवाहाभावेऽभाववत्। एवं समर्थितं तत्कार्यं सिध्यति।

---

12a यद्यन्यत्तत्र समर्थन्तद[9]भावात्तन्न जातमेतन्निवृत्तौ निवृत्तिस्तर्हस्य कथमिति चेदाह (।) एतन्निवृत्तावित्या(2a5)दि। एतस्याग्नेर्निवृत्तौ धूमनिवृत्तिर्येयं धूमस्य सा यदृच्छासम्वादः। काकता[1]लीयन्यायेनेत्यर्थः। यदा तु सत्स्वपीति क्रियते तदा सर्व्वेषां तत्र सन्निपातादेतस्यैव निवृत्तावस्य निवृत्तिरिति निश्चयान्न यदृच्छा-सम्वाद इत्यभिप्रायः।

किम्वदे[2]तन्निवृत्तौ निवृत्तिर्यदृच्छासम्वाद इत्याह (।) मातृविवाह (2a5) इत्यादि। मातुर्विवाह उचित आचरितो यस्मिन्देशे स तथा। ततो देश-शब्देन सह विशेषणसमास[3] (:।) तत्र स च जन्माश्रयत्त्वादुपचारात्। जन्म उत्पत्तिर्यस्य तस्य पारसीकदेशभावि न यावत्। देशान्तरे मालवकादिदेशे यथा-ऽभावो मातृविवा[4]हाभावे यदृच्छासम्वादस्तद्वदत्रापि। तथाहि मृद्विशेषाभावा-द्देशान्तरे तस्याभावो न तु मातृविवाहाभावादिति काकतालीयस्तदभावे तस्या-भा[2]व इति। एवञ्चैतत्।

अथवा अन्यथा व्याख्यायते। यथेदं धूमादिकार्यमस्मिन्नग्नीन्धनादिकारण-कलापे सति भवति। वाक्याध्याहारस्तु पूर्व्व[6]वत्कार्यः। तस्य प्रयोजनं तदेवाव-गन्तव्यं। इदम्प्रत्यक्षव्यापारसङ्कीर्त्तनं। सत्स्वपीत्यादिनाऽनुपलम्भस्य तदन्येषु पुनस्तस्मादग्न्यादिकारणकलापात्। अन्ये[7]षु गवाश्वादिषु समर्थेषु तद्धेतुष्वस्या-ग्न्यादिकारणकलापस्याभावे न भवति। एतच्च परमतापेक्षमुक्तं। न तु तेषान्तद्धे-तुत्त्वमस्ति। यदि पुनस्ते तस्य हेतवः स्यु[8]स्तदा तत्कलापसन्निधेः प्रागपि पश्चा-दिव धूमोत्पादप्रसङ्गः। तत्सापेक्षतया तत्कृतकत्त्वं तेषामिति चेत्। आयातं तर्हि तस्य कलापस्य कारणत्त्वं।

12b भवतु[9]तर्ह्युभयोरपि न नः काचित् क्षतिरिति चेत्। न। व्यतिरेकगतस्तत्र दुर्घटत्वादित्युक्तं। यथाऽपगतेष्वपि सर्व्वेषु तेषु तस्मि कलापे सति भवत्येव तस्य सम्भव इति तद[1]भावे न भवतीति वाच्यं। तत्किमर्थं सत्स्वपीत्याद्युक्तमिति चेदाह। एवं ही(2a4)त्यादि। अन्यथा तस्य कलापस्याभावे न भवतीत्युपदर्शने तस्यापि गवाश्वादेस्तत्राभावे सति[2] सन्दिग्धमस्य कलापस्य सामर्थ्यम्भवेत्। यतोऽन्यद् गवाश्वादि तत्र शक्तं तदभावात्तन्न भूतमेतस्य कलापस्य निवृत्तौ निवृ-त्तिर्यदृच्छासम्वादः शेषं पूर्व्ववत्।

सिद्धं[5] सत्स्वसम्भवेन तत्सम्भवं साधयति कार्यस्य कारणाव्यभिचारात्। अव्यभिचारे च स्वकारणैः सर्वकार्याणां सदृशो न्यायः। एवमसमर्थनं कार्यहेतावपि साधनाङ्गावच[6]नं तद्वादिनः पराजयस्थानं। असमर्थिते तस्मिन् कार्यत्वासिद्धेरर्थान्तरस्य तद्भावाप्रतिबद्धस्वभावस्य

---

एवाङ्कार्य[3]कारणभावनिश्चयोपायविधिमुक्त्वा प्रकृतमुपसंहरति। एवमि(2 a 5)त्यादिना। एवं यथोक्तेन विधिना तद्धूमादि तस्य वह्न्यादेः कार्यं समर्थितं निश्चितं[4] सिध्यति भवति। यदेवासमर्थितमसन्दिग्धं सिध्यति निश्चीयते। अथवा एवं प्रत्यक्षानुपलम्भाभ्यां समर्थित[? तं] सत्तत्तस्य कार्यं सिध्यति।

यदि नाम सिध्यति त[5]त् किमित्याह। सिद्धं सत् स्वसम्भवेन आत्मसन्निधानेन तत्सम्भवं तस्य कारणस्य सन्निधानं साधयति (2 a 6)। देशकालाद्यपेक्षयेत्याध्याहर्त्तव्यं। एतदुक्तम्भ[6]वति (।) कार्यकारणभावनिश्चयात्सिद्धं तदुत्पत्तिलक्षण प्रतिवस्तु यत्रैवमतादृश उपलभ्यते तत्रैव स्वसत्तामात्रेण देशकालाद्यपेक्षया तत् स्वकारणङ्गमयतीति। किं[7] कारणमित्याह (।) कार्यस्य कारणाव्यभिचारादि(2 a 6)ति। अन्यथा हि तत्तस्य कार्यमेव न स्यात्। तद्व्यभिचारात्। नहि यद्व्यतिरेकेन[? ण] यद् भवति तत्तस्य कार्यं युक्तं। कुण्डलमिव केयूर[8]स्येत्यभिसन्धिः।

ननु यदि नाम धूमोऽग्निकार्यंत्वन्न व्यभिचरति। अन्यस्य त्वङ्कुरादेः स्वकारणैरेव बीजादिभिरव्यभिचार इति कुत एतदित्याह। अव्यभिचारे चे(2 a 6)त्यादि। इ[9]दमुक्तम्भवति। यदा धूमस्य स्वकारणाव्यभिचारस्त- 13a
दुत्पत्तेः सिद्धस्तदा बीजादिभिरात्मीयैः कारणैः सहाङ्कुरादीनां सर्व्वकार्याणां सदृशोऽव्यभिचारन्यायः। तथाहि[1] तेपि यथोक्तप्रकाराभ्यां प्रत्यक्षानुपलम्भाभ्यां तत्कार्यतया सिद्धाः सन्तस्तदव्यभिचारिणः सिद्ध्यन्ति। एतत्साधनाङ्गसमर्थनं कार्यहेतौ। एतद्विपरीतञ्चासमर्थ[2]नं। तद्वादिनः पराजयाधिकरणमिति दर्शयन्नाह। एवमि(2 a 6)त्यादि। एवमिति प्रत्यक्षानुपलम्भाभ्यां यथोक्तप्रकाराभ्याङ्कार्यहेतावपि न केवलं पूर्व्वोक्तेन प्रकारे[3]ण स्वभावहेतावसमर्थनम्वादिनः पराजयस्थानमित्यपि शब्दः। कस्मादेवमित्याह। असमर्थित(2 a 7)मित्यादि। असमर्थिते तस्मिन्कार्यकारणभावे[4] लिङ्गलिङ्गिनो(र्) लिङ्गस्य वा तत्कार्यत्वे आरब्धार्थासिद्धेरिति क्रियापदं॥ आरब्धोऽर्थः कारणस्य सत्तासाधनं। तस्यासिद्धेस्तत्पराजयस्थानमिति[5] प्रकृतेन सम्बन्धः।

एतदेव कुत इत्याह। अर्थान्तरस्य( 2 a 7 )धूमादेर्भावे सत्त्वे तस्या-

भावे तद्भावनियमाऽभावादारब्धार्थासिद्धेर्वस्तुतः कार्यस्या[7]प्युपादाने तदप्रतिपादनात् ॥ तृ ॥

अनुपलब्धावपि प्रतिपत्तुरुपलब्धिलक्षणप्राप्तस्यानुपलब्धिसाधनं समर्थनं तादृशस्यात्र चानुपलब्धेरसद्व्यवहारसिद्धेः । अनुपलब्धिल[8]-क्षणप्राप्तस्य प्रतिपत्तृप्रत्यक्षोपलब्धिनिवृत्तावप्यभावासिद्धेः । तत्रोपलब्धि-लक्षणप्राप्तिः स्वभावविशेषः । कारणान्तरसाकल्यञ्च स्वभावविशेषो यन्न

---

न्यादेर्भावनियमाभावात् । नियमग्रहणं यदृच्छासम्वादनिरा[6]सार्थं । अर्थान्तरस्यापि तद्भावे प्रतिबद्धस्वभावस्य भावे भवत्येव तद्भावनियम इत्यत आह । तद्भावाप्रतिबद्धस्वभावस्ये(2 a 7)ति । तद्भावेऽग्न्यादिभावेऽप्रतिबद्धोऽना-य[7]त्तः स्वभावोऽस्येति विग्रहः । एतच्चार्थान्तरस्य भावे तद्भावनियमाभावादित्येतस्य कारणमवगन्तव्यं । प्रयोगः पुनर्योऽर्थान्तरभूतो यस्मिन्न प्रतिबद्धस्वभाव[8]-स्तस्य भावे न तद्भावनियमः । तद्यथा नूपुरस्य भावे मुकुटस्य । अर्थान्तरभूतश्चायं धूमादिरप्रतिबद्धस्वभावस्तस्मिन्नग्न्यादाविति व्यापकानुपलब्धिः । व्यापक-
13b विरु[9]द्धोपलब्धिविधिना वा हेत्वर्थकल्पनातद्भावाप्रतिबद्धस्वभावत्वमेव कुत इत्याह (1) कार्यत्वासिद्धे (2 a 7) रिति । एतत्पुनरसमर्थिते तस्मि-नि[?न्नि]ति बोद्धव्यं । तत् च परमार्थतस्ते[1]न कार्यहेतुरेवोपात्तस्तद्यदि नाम तत्कार्यत्वेन न समर्थितं तथाहि कथमसौ निगृहीत इत्याह । वस्तुतः कार्यस्याप्युपादान-प्रतिपादनादि(2 a 8)ति तत्कार्यत्वस्येति वि[2]शेषः ॥०॥

एवं कार्यहेतावपि साधनाङ्गसमर्थनमभिधायानुपलब्धावाह । अनुपलब्धावपि समर्थन(2a8)मिति सम्बन्धः । साधनाङ्गस्येत्यध्याहार्यं । किं पुनस्तदित्या[3]ह । अनुपलब्धिसाधनं । किं यस्य कस्यचिन्नेत्याह । उपलब्धिलक्षणप्राप्तस्येति (2a8) । दृश्यस्वभावस्य नान्यस्येति यावत् । उपलब्धिर्ज्ञानं । उपलब्धिशब्दस्य भा[4]वकरणसाधनतया ज्ञानपर्यायत्वात्तस्या लक्षणङ्कारणं । लक्षणशब्दस्य करणसाधनत्वेन कृतकाभिधायित्वात् । तच्च प्रत्ययान्तरसाकल्यं स्वभाव-वि[5]शेषश्च । तद्व्याप्तस्यानुपलब्धिः । तस्याः साधनं प्रतिपादनमिति व्युत्पत्तिक्रमः ।

कथमेवंविधस्यानुपलब्धिरिति चेत् । नोच्यते तस्य तत्रैवेत्यपित्वन्य[6]त्र तज्जातीयस्य । कस्य पुनरेवं विधस्यानुपलब्धिः प्रसाध्यत इत्याह । प्रतिपत्तुः (2a9) प्रतिवादिनः । यदि चोपलब्धिलक्षणप्राप्ताः पिशाचादयोपि भवन्ति

त्रिविधेन विप्रकर्षेण[9] विप्रकृष्टं । यदनात्मरूपप्रतिभासविवेकेन प्रतिपत्तृ-
प्रत्यक्षप्रतिभासरूपं । तादृशः सत्स्वन्येपूपलम्भप्रत्ययेषु तथानुपलब्धो-
ऽसद्व्यवहारविषयस्तोन्यथा[10]सति लिङ्गे संशयः । अत्रापि सर्वमेवं- 2b

---

तज्जातीयानां[7] अन्येषाम्प्रभाववता वा । तत्किन्तेषामप्यनुपलब्धिसाधनं साध-
नाङ्गसमर्थनम्भवति । नेत्याह । प्रतिपत्तुः । एतदुक्तम्भवति(।)य एवासौ प्रति-
पाद्यस्तस्यैव यदुपलब्धिलक्षणञ्चा[8]याति तस्यैवानुपलब्धिसाधनं नान्यस्येति । किं
पुनः कारणमेवम्प्रकारस्यैवानुपलब्धिसाधनं । नान्यस्येत्याह । तादृश्या एवा- 14a
नुपलब्धेरसद्व्यवहारसिद्धेरिति (2a8) । अ[9]नुपलब्धिलक्षणप्राप्तानुपलब्धेः
संशयहेतुतया अगमकत्त्वादिति भावः । असद्व्यवहारसिद्धेरिति वचनमसद्व्यव-
हार एव तया साध्यते न त्वभावः स्वभावानु[1]पलब्धेः स्वयमभावरूपत्वादिति
प्रदर्शनार्थं । असद्व्यवहारग्रहणञ्चोपलक्षणार्थं । तेनासज्ज्ञानशब्दावपि ग्राह्यौ ।
एतत्पुनः कुतोऽवसीयते इति चेदाह ॥[2] अनुपलब्धिलक्षणप्राप्तस्यार्थस्य
प्रतिपत्तुः प्रत्यक्षं तदेवोपलब्धिस्तस्यानिवृत्तावपि सत्यामभावासिद्धेः (2a9) ।
अभावग्रहणमभावव्यवहारशब्दज्ञानोपलक्ष[3]णं । उपलब्धिलक्षणञ्च ज्ञानपरिग्रहेण
तत्प्रमितवस्तुव्युदासाय । का पुनरियमुपलब्धिलक्षणप्राप्तिर्यद्योगादुपलब्धि-
लक्षणप्राप्त इत्युच्यत इ[4]त्याह । तत्रेत्यादि (2a9) । तत्र श्रुतिवचनोपन्या-
सार्थो । स्वभावविशेषः । किमियदेव । नेत्याह । कारणान्तरसाकल्यञ्च । तस्मा-
त्स्वभावविशेषाद्यान्यन्यानि[5] कारणानीन्द्रियमनस्कारादीनि तानि कारणान्त-
राणि तेषां । साकल्यं सामग्र्यं । स्वभावविशेषापेक्षया समुच्चयार्थश्चकारः ।
कः पुनरयं स्वभाव[6]विशेष इत्याह । स्वभाव इत्यादि (2a9) । यद्ययं त्रिविधेन
विप्रकर्षेण व्यवधानेन देशकालस्वभावलक्षणेन न विप्रकृष्टं मेरुरामसुरादिरूपवत्
स्वभाववि[7]शेष उच्यते । तमेव स्पष्टयति । यदि (2a10) त्यादिना । न आत्म-
रूपोऽनात्मरूपः पररूप इत्यर्थः । स चासौ प्रतिभासश्च तस्य विवेकोऽभावस्तेना-
कारेण यत्प्रतिप[8]त्तुः प्रत्यक्षन्तत्राप्रतिभासितुं शीलं यस्य रूपस्य स्वभावस्य
तद्रूपन्तथोक्तं । अथवा रूपशब्देण[?न] सह विशेषणसमासः कार्यः । सत्युप-
लम्भप्रत्ययान्तरसा[9]कल्य इत्युपस्क्रियते । यः सजातीयविजातीयरहितेनात्मना 14b
प्रतिभासते स्वज्ञाने तदन्यकारणसमवधाने सति स स्वभाव इति यावत् । तादृश
इति त्रिविध[1]विप्रकर्षाविप्रकृष्टरूपः पदार्थस्तथाऽनात्मरूपप्रतिभासविवेकेन प्रति-
पत्तृप्रत्यक्षप्रतिभासेनाशयेनानुपलब्धः स न असद्व्यवहारस्य विषयो भवति ।[2]
असद्व्यवहारप्रतिपत्तियोग्यो भवतीत्यर्थः । विद्यमानोपीन्द्रियस्यालोकस्य मनस्का-

विधमसद्व्यवहारविषय इति व्याप्तिः, कस्य चिदसतोभ्युपगमे तल्लक्षणा-
विशेषात्। न ह्येवंविधस्यासत्त्वानभ्युपगमेऽन्यत्र तस्य योगः। न ह्येवं-

---

रस्य वाऽभावान्नोपलभ्यते तादृशस्तत्कथमसद्व्यवहारविषयो भवतीति[3] चेदाह।
सत्स्वन्येषूपलम्भ (2a10) कारणेष्विति।

नन्वविप्रकृष्टोपि घटादिरुपलम्भकारणान्तरसमवधानेपि च सन्तानविप-
रिणामापेक्षत्वान्नोपलभ्यते।[4] नहि हेत्वन्तरसन्निधानमिति स्वफलोत्पादनानु-
गुणः परिणामो भवति कारणस्य (।) तथाहि सत्यामपि पृथिवीबीजजलादि-
सामग्र्यामतिबहुनैव [5] कालेन तालबीजस्य स्वकार्योदयानुकूला परिणतिर्भवति।
शणादिबीजस्य त्वनन्तरमेव तथात्रापि भविष्यतीति। किञ्चान्यत्प्रभाववता-
योगे पि[6]शाचमायाकारादिनाऽधिष्ठितो भवति यदायं भावस्तदा विद्यमानोपि नोप-
लभ्यते तत्कथमुक्तं तादृशः सत्स्वन्येषूपलम्भकारणेष्वनुपलब्धोऽसद्व्यवहारविष[7]य
इति। नूनम्भवान्न्यायविन्दा (व)[१] प्यकृतपरिश्रमः। तथाहि अत्रोक्तं स्वभावो यः
सत्स्वन्येषूपलम्भकारणेषु सन्प्रत्यक्ष एव भवतीति। यश्चायं सन्तानपरिणामम[8]पेक्षते
यश्च प्रभाववताधिष्ठितः स स्वभावविशेष एव न भवति। सकलतदन्योपलम्भ-
15a प्रत्ययसमवधानेपि स्वरूपविषयोपलम्भजनकत्वात्तथैवंविधस्य पि[9]शाचादि-
स्वभावाविशिष्टरूपस्याभावव्यवहारविषयता साध्यते। किन्तर्हीन्द्रियाण्युपलम्भ-
प्रत्ययान्तरसन्निधाने यः सन्प्रत्यक्ष एव भवति तस्य। नैवन्तर्हि सर्वथाऽ[1]भावः
साधितो भवतीति चेत् सुष्ट्वनुकूलमाचरसि। यतोऽनन्तरमेवोक्तं। य एवायमनु-
पहतेन्द्रियादिसाकल्ये दर्शनपथमुपयाति। तस्य च तत्साकल्येऽनुप[2]लम्भेस्य च
व्यवहारविषयता साध्यते न तु पिशाचादिस्वभावाविशिष्टरूपस्येति। न च तथा-
विधस्यापि सकलतदन्योपलम्भप्रत्ययसमवधानेऽनुपलब्धस्या[3]स्तित्वं युक्त-
मनुपलब्धेरेवायोगात्। उपलम्भजनने कस्यचिदपेक्षणीयस्याभावात्। प्रमाण-
विनिश्चये तु स्पष्टीकृतमेवेदं। न कार्यकालेऽभावप्रति[4]पत्तेरित्यादिना। एतेनैव
यदेकेनावश्यं सामग्रिसाकल्येपि परिणामस्तालगणबीजवदित्यादिना स तमति-
शयवत् मतिमतो मनागप्यनव[5]गच्छन्तश्चोद्यचुञ्चवश्चोचुदुस्तत्र सर्वमयं
दुःस्थितं वेदितव्यमित्यलमप्रतिष्ठितबालप्रलापैरिति विरम्यते। तस्मादुपलब्धि-
लक्षणप्राप्तानुपल[6]ब्धिरेवाभावव्यवहारसाधनीति स्थितमेतत्। यतश्चैतदेवं
ततस्तस्मात्कारणादन्यथा सति लिङ्गे समवाय उपलब्धिलक्षणप्राप्तानुपलब्धि-

---

[१] न्यायविन्दौ द्वितीयपरिच्छेदे लिङ्गस्य त्रिषु भेदेष्वेकः।

विधस्य सतः स[1]त्स्वन्येषूपलम्भकारणेष्वनुपलब्धिः । अनुपलभ्यमानं त्वीदृशं नास्तीत्येतावन्मात्रनिमित्तोयमसद्व्यवहारोऽन्यस्य तन्निमित्त-

---

मुक्त्वा यदन्यदसद्व्य[7]वहारसाधनमनुपलब्धिमात्रं लिङ्गमुपादीयते । तदा
तस्मिन्सति संशयो भवति नास्त्यसद्व्यवहारनिश्चयः उपलब्धिनिवृत्तावप्यर्था-
भावासिद्धेरिति समुदायार्थ[8](:।) यदि वा ततो दृश्यानुपलम्भाल्लिङ्गात्
सकाशादन्यथा सति लिङ्गे संशय इति व्याख्यातव्यं । तस्माच्छब्दस्तु पूर्वमध्या
हर्त्तव्यं । अथवा तत उपलब्धिलक्षणप्राप्ताद[9]न्यथा तद्विहीने संशये सति तल्लिङ्ग 15b
इति व्याख्येयं । का पुनरत्रानुपलब्धौ व्याप्तिरित्याह । अत्रापीत्यादि (2b11) ।
एवं विधमिति दृश्यं सदनुपलब्धं(।)सर्व्वग्रहणं सर्व्वोपसं[1]हारेण व्याप्तिप्रदर्शनार्थं ॥

ननु यदि नाम कस्यचिद्विषाणादेः शशमस्तकादावुपलब्धिलक्षणप्राप्तानु-
पलब्धस्यासद्व्यवहारविषयता । अन्येनापि सामान्ये वि[2]शेष्येवयविद्रव्यसंयोग-
विभागादिना तथाविधेन तथा भवितव्यमिति कुतोऽयं नियम इत्यत आह । कस्य-
चिदि (2b1) त्यादि । कस्यचिदुपलब्धिलक्षणप्राप्तस्या[3]नुपलब्धस्य शशविषा-
णादेरसतोऽसद्व्यवहारविषयेस्त्यभ्युपगमेऽसद्व्यवहारादिविषयोऽसन्नित्युक्तः ।
तल्लक्षणाविशेषादि(2b1)ति । तस्या[4]सतो लक्षणं निमित्तं यथोक्तानुपलब्धि-
लक्षणशब्दश्च करणसाधनस्तस्याविशिष्टत्वात् सामान्यविशेषावयविद्रव्यादा-
विति वाक्यशेषः । एत[5]दुक्तम्भवति शशविषाणादेरप्यसद्व्यवहारविष(य)-
त्वं कस्मादिष्यते । यथोक्तानुपलम्भस्य तन्निमित्तस्य सद्भावादिति चेत् । यद्येवं
सामान्यविशे[6]षता तस्यास्तीति कस्मात्तथा सद्व्यवहारविषयत्वन्नाभ्युपगम्यते(।)
अन्यथा तत्रापि तत्स्याच्चेत् । नहि पुरुषेच्छावशाद्धेतौ विषयप्रविभागो युक्त
इति । नही(2b1)त्या[7]दिनैतदेव व्यनक्ति । एवंविधस्य दृश्यस्य सत्त्वेऽनुपलब्धस्या
सत्वानभ्युपगम(2b1) इति । असद्व्यवहारादिविषयत्वान्नाभ्युपगम इत्यर्थः
असत्वशब्देना[8]सद्व्यवहारो विनिश्चयस्तस्योपलक्षणम् । युक्तोपलम्भस्य तस्यैवा
नुपलम्भनं प्रतिषेधहेतुरित्यादि चेत् । अन्यत्र शशशृङ्गाभावे दण्डेन पुरुषस्य (?)
योगः स[9]एव इत्यर्थः (।) नह्येवंविधस्य दृश्यस्य चक्षुरादिशून्येषूपलम्भकारणेषु 16a
स अनुपलब्धिर्भवति[1] ॥

किन्तर्ह्युपलब्धिरेव भवतीति प्रतिषेधद्वयेनाह । अन्यस्योपलब्धिप्रत्ययस्य
कस्यचिदपेक्षणीयस्याभावादिति भावः । तदनेन प्रकृतमेव स्पष्टयति । अनुपल[2]-
भ्यमानं त्वीदृशमित्युपलब्धिलक्षणप्राप्तन्नास्ति तस्मादेतावत्मात्र उपलब्धिलक्षण-
प्राप्तानुपलब्धिमात्रन्निमित्तं यस्यासद्व्यवहारस्य स तथा ख्यातः तदनेनासत्[3]

स्याभावात्। सर्वसामर्थ्यविवेको निमित्तमिति चेत् । एवमेतत्तस्यैव सर्व[2]-
सामर्थ्यविवेकिन एवं प्रतीतिरन्यस्य तत्प्रतिपत्त्युपायस्याभावात् । तत्प्रति-
पत्तौ च सत्त्यामसद्व्यवहार इतीदं तन्नि( मि )त्तमुच्यते ।

बुद्धिव्यपदेशार्थक्रियाभ्यः सद्व्यवहारो विपर्यये चा (ऽ)सद्व्यवहार[3]
इति चेत् । भवति बुद्धेर्यथोक्तप्रतिभासायाः सद्व्यवहारो विपर्ययेऽसद्व्य-

---

व्यवहारस्यानन्यनिमित्ततामाह । एतदेव कुत इत्याह । अन्यस्ये(2b2)त्यादि ।
यथोक्तानुपलब्धिमपास्यान्यस्य नास्तित्वव्यवहारनिमित्तस्याभावादिति स[4]म्[? मु]
च्चयार्थः ।

ननु च यस्य यत्र न किञ्चित्सामर्थ्यमस्ति तदसद्व्यवहारविषयो यथा नभस्तले
कमलं । तथाभिमतेपि देशादावभिमतस्य भावस्य[5] न किञ्चित्सामर्थ्यमस्तीति
सर्व्वसामर्थ्यविवेक एव नास्तित्वव्यवहारस्य निमित्तं भविष्यति। एतत्किमसं-
बद्धमेवोद्घाटितशिरोभिरभिधीयते । अ[6]न्यस्य तन्निमित्तस्याभावादिति कदाचित्
कश्चित् ब्रूयादिति तन्मतमाशंकते। सर्व्वसामर्थ्यविवेको निमित्तमिति (2b2)चेदि
ति। अत्र समाधिमाह। एवमि(2b2)त्यादिना । एवं[7] मन्यते सूक्तमेतत् सर्व्व-
सामर्थ्यविवेको निमित्तमिति किन्तु स एव सर्व्वसामर्थ्यविवेकोयं पदार्थः कथमव-
गतो यथोक्तामनुपलब्धिमपास्य येन सर्व्वसामर्थ्यवि[8]वेकोऽस्यासद्व्यवहारस्य
निमित्तम्भविष्यति। न चासावज्ञात एव तस्य निमित्तम्भवितुमर्हति। ज्ञापकहेत्व-
16b धिकारात् । कस्मात्सर्व्वसामर्थ्यविवेकिनो यथोक्तानु[9]पलम्भेने[नै?]व प्रतीति-
रित्याह। अन्यस्य तत्प्रतिपत्युपायस्याभावा[*](2b3)दिति। यदा तु यथोक्तानुप-
लब्ध्या तस्य सर्व्वसामर्थ्यविवेकिनः प्रतीतिर्भवति । तदा तत्प्रतिपत्तौ[1] सत्याम-
सद्व्यवहारो भवति। इति तस्मादिदं यथोक्तानुपलम्भनं तस्यासद्व्यवहारस्या-
निमित्तमुच्यते।

पुनरपि परोन्यस्य तन्निमित्तस्याभावादित्यस्य कदाचि[2]दयुक्ततांब्रूयादि-
त्याशङ्कते बुद्धिव्यपदेश (2b3) इत्यादिना। अयमस्याभिसन्धिर्बुद्धिव्यपदे-
शार्थक्रियाभ्यः सकासा[? शा]त्सद्व्यवहारो भवति । तथा हि ताः प्रवर्त्तमाना[3]
वस्तुसत्तां साधयन्ति । तद्भेदाभेदौ च वस्तुभेदाभेदावित्याशयः ।
ताश्च निवर्त्तमानाः स्वनिमित्तं सद्व्यवहारं निवर्तयन्त्यग्निरिव धूमं । तन्निवृत्तौ[4]
चासद्व्यवहारः । सद्व्यवहारासद्व्यवहारयोरन्योन्यव्यवच्छेदस्थितरूपत्वेन
एकत्यागस्यापरोपादानेनान्तरीयकत्वात् । ततश्च बुद्ध्यादिनिवृत्तौ[5] चासद्व्यव-
हारनिमित्तमिति नेदं युक्तं वक्तुमन्यस्येत्यादि। अत्रापि प्रतिविधानमाह। भव-

वहारः। प्रत्यक्षविषये तु स्याल्लिङ्गजाया अपि कुतश्चित्सद्व्यवहारः। असद्व्यवहारस्तु तद्विपर्ययेऽ[4]नैकान्तिको, विप्रकृष्टेऽर्थे प्रतिपत्तृप्रत्यक्षस्यान्यस्य

---

ती(2b4)त्यादि। यथोक्तप्रतिभाषा[?सा] बुद्धिः प्रतिपत्तृप्रत्यक्षप्र[6]तिभासिरूपनिर्भासा यथोक्तः प्रतिभासो यस्या इति विग्रहः। उक्तञ्च यदनात्मेत्यादिना। तस्याः सकासा[?शा]त्सद्व्यवहारो भवति साक्षा(द्) वस्तुग्रहणात्। तस्या[7]ञ्च विपर्ययोऽभावस्तस्मिन् सत्यसद्व्यवहारो भवति। सत्स्वन्येषूपलम्भकारणेष्विति वाक्यपरिसमाप्तिः कार्याः[?र्या]। अन्यथा संस[?श]योत्पत्तेः। नहि वस्तुसत्व उपलं[8]भप्रत्ययान्तरसाकल्ये च सा निवर्त्तत इति[9] निवेदितमेतत् पुरोऽस्मा- 17a
भिरितिभावः। तदनेन यद्येवंविधा बुद्धिरभिमता त्वया तदावयोरैकमत्यमेव तथापि न नः किञ्चिदनिष्टमुक्तं स्यात। अथान्या[?न्यः] तदा व्य[1]भिचार इति दर्शयति। तमेव व्यभिचारन्दर्शयन्नाह। प्रत्यक्षाविषये(2b4)त्यादिना। लिङ्गाज्जाता लिङ्गजाः। अनुमानमित्यर्थः। तस्याः सकासा[?शा]त्सद्व्यवहारः स्यात्परो[2]क्षेऽर्थेन केवलमनन्तरोदितरूपायाः स्वग्राहच इत्यपिनाह। किं लिङ्गजायाः सर्व्वस्याः सम्भवति नेत्याह। कुतश्चिदि(2b4)ति(।) स्वभावकार्यलिङ्गद्वयबलोपजाता[3]या इत्यर्थः। अनुपलम्भस्यासत्ताऽसद्व्यवहारसाधकत्वादिति भावः। यदि नामे[?मै]वं ततः कथम्व्यभिचार इति चेदाह। असद्व्यवहारस्त्व(2b4)त्या[4]दि। तद्विपर्य इति तस्या यथोक्तलिङ्गजाया बुद्धेर्विनिवृत्तावनैकान्तिकः सन्दिग्ध इत्यर्थः। किं कारणं विप्रकृष्टेर्थे देशादिविप्रकर्षे[5] प्रतिपत्तृप्रत्यक्षस्य प्रमाणस्य निवृत्तावपि संशयात्कारणात्। अर्थाभाव इति शेषः(।) प्रतिपत्तुः प्रत्यक्षमिति षष्ठीसमासः। इदञ्च प्रही[6]णसकलज्ञेयावरणस्य प्रत्यक्षनिवृत्तौ त्वसंदेह एवेति कथनायोपात्तं। अन्यस्य चेत्यनुमानस्यागमस्य च। एतच्चागमस्य प्रामाण्यमभ्युपगम्याभिधीय[7]ते। न तु तस्य प्रामाण्यमस्ति (।)

नान्तरीयकताभावाच्छब्दानाम्वस्तुभिः सह (।)
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचका(ः।।४)

इत्यादिवचनात्।

अयमस्याभिप्रायो यदि[8] नाम प्रमाणत्रयन्निवृत्तमप्रत्यक्षवस्तुनि तथापि तन्नास्तीति कुतोयन्निश्चयः। तथाहि मलयनगनिकुञ्जवर्त्तिदूर्व्वाप्रवालपत्रप्रभृतयः प्रमाणत्रयगोच[9]रभावातिक्रान्तां मूर्तिमुद्वहन्तस्तिष्ठन्ति। न च ते न 17b

वा प्रमाणस्य निवृत्तावपि संशयात्। न च सर्वे बुद्धिव्यपदेशास्तद्भेदाभेदौ वा वस्तुसत्तां वस्तुभेदाभेदाभेद(?)सत्तां वा सा[6]धयन्ति। असत्स्वपि कथञ्चिद-

---

सन्तीति शक्यमभिधातुं। प्रमाणभावस्य सकलविषयसत्वव्यापकत्वकारणत्वाभावात्। न च तद्रूपविकलपदार्थनि[1]वृत्तावन्यनिवृत्तिनियमेनातिप्रसङ्गदोषोपनिपातादित्यावेदितमेतः [?तत्] पुरस्तात्। यदाह।

शास्त्राधिकारासम्बद्धा बहवोऽर्थाक्रितेन्द्रियाः।
अलिङ्गाश्च कथन्तेषामभावोऽनुपलम्भता (।।५) इति।

ननु चात्र लिङ्गजाया मतेरसद्व्यवहारहेतुत्त्वं निषेद्धुमारब्धन्तद्विपर्य्यय इत्याद्यभिधानात्। तत्कस्मादप्रस्तुतस्यैव प्रत्यक्षस्य चागम[3]स्य चोपक्षेपः कृत इति-चेत्। युक्तमेतत्। सर्वप्रमाणनिवृत्तेस्त्वगमकत्वप्रदर्शनेनैतदेकान्तासम्भवदर्शनायोक्तमिति लक्ष्यतेऽस्य सुधियोऽ[4]भिसन्धिः।

नन्विदमुक्तं सद्व्यवहारासद्व्यवहारयोरन्योन्यव्यवच्छेदस्थितलक्षणत्वे नैकाभावस्यापरभावनान्तरीयकत्वात् विप्रकृष्टे तन्निमित्ता[5]भावात् सद्व्यवहारनिवृत्त्याऽसद्व्यवहार इति (।) सत्यमुक्तमेवैतन्न पुनर्युक्तं। तथाहि परोक्षेऽर्थे सद्व्यवहारनिवृत्तिः कथन्तन्निमित्ताभावेपि[6] द्वयोरप्यनयोरनुपलब्ध्योः स्वविपर्ययहेत्वभावभावाभ्यां सद्व्यवहारप्रतिषेधफलत्वन्तुल्यमेकत्र संशयादपरत्र विपर्ययादिति वचनात् संशयेनेति चेत्।[7] यद्येवं कथन्तर्ह्यसद्व्यवहारनिश्चयस्तत्र युक्तिमनुपतति। यत्र तु निश्चयेन सद्व्यवहारनिवृत्तिस्तत्रासद्व्यवहारोपि युक्त एवान्यः प्रवर्तनफलोसीत्युक्तेः[8] न चाभावरूपव्यवच्छेदे भावानुषङ्गोस्ति नियमेन। नहि बन्ध्यातनयनभःपङ्कजादिष्वसदवस्थता भवति प्रतिषेधात्
18a सदवस्थता भवति प्रतिषेधमात्रन्तु स्यात्। तयो[9]रन्योन्यव्यवच्छेदेनावस्थानात्। तथात्राप्यप्रत्यक्षे सद्व्यवहारप्रतिषेधान्न विधिभूता सद्व्यवहारानुस[?ष]ङ्गस्तद्व्यवच्छेदमात्रन्तु स्यात्। तद्भावस्य तद्भावस्यान्योन्यपरिहारेण[1] अवस्थितत्वात्। उक्तञ्चैतदमलन्यायतत्वप्रबोधोद्गतप्रज्ञालोकतिरस्कृताशेषपरतीर्थ्यप्रवादध्वान्तेन धर्मकीर्तिनैवानित्यनिरात्मतादिव्यवच्छेदेपि तच्च स्यादित्यादि-[2]नेत्यास्तान्तावत्।

अधुना सामान्यभूतानां बुद्धिव्यपदेशानां सद्व्यवहारहेतुत्वमपि नास्तीति कथयन्नाह। न चे(2b5)त्यादि। तत्र च यथाक्रममभिसम्बन्धः। ते सर्वे बुद्धिव्यपदे[3]शा न वस्तुसत्तां साधयन्ति। तेषाम्वा भेदाभेदौ न वस्तुभेदाभेदयोः सत्ता-

तीतानागतादिषु नानैकार्थक्रियाकारिषु वार्थेषु तद्भावस्थापनाय नानैकात्मता ऽभावेपि नानैकरूपाणां वृत्तेः। राजा *महासम्मतः* प्रभवो[6] राजवंशस्य। *शंख*श्चक्रवर्त्ती महासम्मतनिर्म्मितस्य यूपस्योत्थापयिता। शशविषाणं कथं सनिदर्शनं सप्रतिघं घटश्चेति। न हि सनिदर्शनादिशब्दा नानावस्तुविषया ए[7]कत्रोपसंहारात्। नानाविषयत्वेप्येकत्रोपसंहारस्तन्निमित्ता-

---

सद्भावमिति। सर्व्वग्रहणं केचित्तु साधयन्त्येवेति प्रदर्शनाय। कुत एतदित्याह। अस[4]त्स्वप्यतीतानागतादिषु (2b5) वृत्तेरिति क्रियापदं। आदिशब्देन व्योमोत्पलादयः परिगृह्यन्ते। कथम्पुनर्विषयमन्तरेण तेषु तेषां वृत्तिर्युक्तेति चेदाह। कथं[5]चित्त (2b6) द्रूपोनुभवाहितवासनापरिपाकप्रभावादित्यर्थः। तेषाञ्च वस्तुप्रतिबन्धाभावादिति भावः। शङ्खचक्रवर्ती (2b7) त्यादिना प्रकारेण तदनेन वस्तुसत्तां साधयन्तीत्येतस्य कारणमाह। नानैकामर्थक्रिया (2b6) ङ्कर्तुं सी[?शी]लं येषां ते तथोक्ताः। तेष्वपि च वृत्तेः कारणात्। किमर्थं तेषु तेषाम्वृत्तिस्तद्भावख्यापनाय। तेषान्ना ऽ[7]नैकार्थक्रियाकारिणाम्भावस्तस्य ख्यापनाय। नानार्थक्रियाकारित्वस्यैकार्थक्रियाकारित्वस्य च कथनार्थमिति यावत्। अस्त्येव तर्हि तस्य वस्तुनस्तत्वमित्यत आह (।)[8] नानैकात्मताया (2b6) अभावेपि तस्य वस्तुन इत्यधा[?ध्या]हर्त्तव्यं। नानैकरूपाणाम्बुद्धिव्यपदेशानां तदनेन न वस्तुभेदाभेदौ साधयन्तीति साधयति। इदमेव निदर्शन[9]प्रदर्शनेन सफली- 18b
करोति। राजा महासम्मत (2b6) इदमतीतवृत्तेरुदाहरणं। यथेति चाध्याहार्यं। शङ्खचक्रवर्तीत्याद्यनुत्पन्नवृत्तेः शब्दैर्विषाणमित्यादि यदोपात्तस्य रूपं सनिदर्शनञ्चक्षुर्विज्ञानजनकत्वात्। सप्रतिघश्च स्वदेशे परोत्पत्तिप्रतिबन्धात्। एतन्नानार्थक्रियाकारिषु वृत्तेरित्येतस्य निदर्शनं। यस्मात्तच्चक्षुर्विज्ञानादि[2]कार्यजनकत्वादेकरूपमपि नानारूपैः सनिदर्शनादि शब्दैर्विषयीक्रियते। तस्मान्न ते वस्तुभेदसाधनायालं। घटश्चेत्येतदेकार्थक्रियाकारिष्वित्येतस्योदा[3]हरणन्तथाहि बहवो रूपगन्धरसस्पर्शा उदकधारणविशेषादिकार्यनिर्वर्त्तनसमर्थत्वादभिन्नसमैस्तै(:) विषयत्वेनात्मसात्क्रियन्ते। ततस्ते नाभेदं सा[4]धयितुं क्षमाः। तच्च (।) तीतानागतशशविषाणादिषु तत्प्रतिपत्तिर्न वस्तु साधयतीत्यतिप्रतीतमेतत्। अथ कथमिदङ्गम्यते सनिदर्शनादिबुद्धिशब्दा[5] न वस्तुभेदं साधयन्तीत्यतः प्राह। नहीत्या (2b7) दि। कस्मादेवात्र वस्तुनि रूपादावुपसंहारात्सनिदर्शनं सप्रतिघं रूपमित्येव समानाधिकरणत्वादिति[6] यावत्। अन्यथा भिन्नाधिकरणत्वाद्बकुलोत्पलकमलमालतीमल्लिकादिशब्दानामेव सामानाधिकरण्यमेव न

नान्तत्तत्समवायादिति चेत्। आयासे वतायं तपस्वी पदार्थे पतितोऽनेक-सम्बन्धिनमुपहृत्यानेकं शब्दमात्मनि[6] तेभ्यः समाशंसन्। स यैः शक्तिभेदैरनेकं सम्बन्धिनमुपकरोति तैरेवानेकं शब्दं किं नोत्थापयति। एवं ह्यनेन परम्परानुसारपरिश्रमः परिहृतो भवति।

नानाशब्दोत्थाप[9]नासामर्थ्ये नानासम्बन्ध्युपकारोपि मा भूत्।

---

भवेदिति भावः। कणभक्षाक्षपादमतानुसारिण[7]स्तु मिथ्यादर्शनानुरागजनिता-सद्विकल्पमलोपलिप्तान्तर्लोचनाः सञ्चक्षते (।) नानाविषयत्वेप्यभ्युपगम्यमाने तेषामेकत्रोपसंहारोऽविरुद्ध एव। तन्निमित्तानां[8] सनिदर्शनादीनान्तत्र रूपादौ समवायादिति।

तदेतत्सर्वमेषामविचारितरमणीयतया विचारविमर्दाक्षमत्वात् पण्डितजन-

19a हासकारि दर्शनमित्यभिप्रायवा[9]नाह। आयासे वतायमित्या(2b8)दि (।) वतशब्दोऽनुकंपायाङ कासावित्याह। अनेकं सम्बन्धिनं सनिदर्शनत्वादिकमुप-कृत्यानुपकारे तेन तेषान्तत्र सम्बन्धित्वायोगादित्यभि[1]प्रायः। अनेकं सनिदर्शनादि-शब्दं (2b9) तेभ्यः सम्बन्धिभ्यः शकासा [? सकाशा]दात्मनि संमार्गयन्निद-मायासपतने कारणं।

ननु सरूपादिभावो यैः शक्तिभेदैरनेकसम्बन्धिन[2]मुपकरोति। तैरेव शक्ति-भेदैरनेकं बुद्ध्यादिशब्दं किन्नोत्थापयति। यदि पुनरेवं भवेत्तदाको गुणो लभ्यत इत्याह। एवं ह्यनेन परम्परानुसारश्रमः परिहृ[3]तो भवती(2b9)ति। शक्ति-भेदैः सम्बन्धिनमुपकरोति तेभ्यश्च शब्दाः प्रवर्तन्त इत्ययम्परम्परानुसरणाया-सोऽनेन तपश्विना [? तपस्विना] रूपादिना त्यक्तो भवतीत्यर्थः।[4]

ननु च प्रतिनियतोपि कार्यशक्तिमन्तः सर्व्वे एव भावास्त्वयाप्येतदवस्य [? श्य]मेवाभ्युपेयमन्यथा कस्माच्छालिबीजं सा[? शा]ल्यङकुरमेवोत्पादयति न यवाङकुरमिति[5] परेणाभियुक्तेन किमभिधानीयं भावप्रकृतिं मुक्त्वा (।) तस्मात्तव पदार्थप्रकृतिसमाश्रयणमेव शरणमन्यथास्य दोषस्य परिहर्त्तुमशक्यत्वात्[6] (।) एतच्च न ममापि राजकुलनिवारितं। तथाहि शक्यमे(त)त्मयाप्यभिधातुमनेक-सम्बन्ध्युपकार एव तस्य सामर्थ्यं नानैकशब्दोत्थापनमिति चेत्। सत्यमेवमेत[7]त्। एवन्तु मन्यते। न तावत् सनिदर्शनत्वादयः सन्ति। क्रमयौगपद्याभ्यामर्थक्रिया त्वनु-प्रयोगात्। उपलब्धिलक्षणप्राप्तानाञ्चानुपलम्भात् न चोपलब्धिलक्ष[8]णप्राप्तं सदनुपलभ्यमानमस्तीति शक्यते वक्तुमतिप्रसङगात्। अनुपलब्धिलक्षणप्राप्ततायां

अनुपकारे हि तेषां तत्सम्बन्धितापि न सिध्यति । घट इत्यपि च रूपादय

---

वा कथं तन्निबन्धनाः प्रत्ययव्यपदेशाः प्रवर्त्तन्ते गोगवयादिषु (।)[*] एतेनोपलब्धा- 19b
नामपि क्षणिकत्वादिवत् व्यक्तिव्यतिरिक्तेणा [?ना]नुपलक्षणं प्रत्यक्षं यस्मात्सा-
मान्यं यदि दृष्टमप्यविकलं भिन्नं न संलक्षते। भावे तद्बलभाविनी भवति
सा[1]या शब्दवृत्तिः कथं। दण्डचादौ न निबन्धनस्य न गतौ धीशब्दयोरस्ति सा
तस्मादस्य कथञ्चिदेव तदपि ते युक्त्या न सङ्गच्छते[1]।

किञ्च ॥

भावानामैकदेश्यं प्रसजति भवतो[2] दर्शने सर्वथैषां
सत्तादेसा[? शा]दभेदात्सकृदिदमथवा भिन्नदेशे निवृत्तं।
वृत्तौ वानेकमेतन्नहि भवति सकृत्सर्व्वथा वृत्तिभाजां
तालादीनां फलानां बहुषु बहुवि[3]धेष्वाश्रयेष्वेकभावः ॥(६)

सत्वे वा तेषान्न बुद्धिशब्दोत्थापनसामर्थ्यमन्वयव्यतिरेकाभ्यामवधार्यते। अत एवानुपलभ्यमानत्वात्पाचकादिष्वपि च[4] तद्व्यतिरेकेणापि तेषाम्भावात्। उपपादितञ्चैतद् (प्रमाण-)वर्तिके (१।१६०)।

पाचकादिष्वभिन्नेन विनाप्यर्थेन वाचकः।
भेदान्न हेतुः कर्मास्य न जातिः कर्मसंश्र[5]या (॥७)

इत्यादिनेति नेहोच्यते। न च तेषामुपकार्यत्वमस्ति नित्यतयाऽनाधेयातिशयत्वात्। न च पुरुषाभिप्रायानपेक्षो व्यक्त्युपकृतसप्रतिघत्वा[6]दिसामान्यसामर्थ्यभावे-नोपनेयो विवक्षायान्तु संमुखीभावेपि प्रवृत्तिप्राप्तः। पुरुषाभिप्रायानुरूपे वा स ए-वास्तु नियामकः किमन्तर्गलुभिः सामान्यैः[7] (।) तथाहि तद्गतान्वयव्यतिरेकानुविधान मेव लक्ष्यते सामान्यानां न नित्यानामव्यतिरेकत्वात्।

तस्मात्। सर्व्वमेतत् कुदर्शनसमाश्रयेण कल्पनामात्रं। कल्पना च[8] सैव कर्तव्या या पुनर्न्न पर्यनुयोगमर्हति तन्नत्यां कल्पनायां वरमेव कल्पनादोषाभावात्।
गुणसद्भावाच्चेति। सात्मत [? स्यान्मतं] युक्तैवेयं कल्पना। नहि एकस्य नाना
सु[?र्थ]क[9] शब्दोत्थापने सामर्थ्यमस्तीति। यद्येवमत्रापि ब्रूम इत्याह। नानाशब्दो- 20a
त्थापनासामर्थ्ये नानासम्बन्ध्युपकारोपि माभूदि (2b10)ति। एकस्यानेकोपकार-कत्वविरोधाभ्युपगमादित्यभिसन्धिः। नित्यत्वात्सम्बन्धिनामनुपकारोऽभ्युपेत एवेति चेदाह। अनुपकारे हि तेषां (2b10) सनिदर्शन[?]त्वादीनान्तेनाङ्गीक्रियमाणे तत्सम्बन्धिता न सिध्यति। नहि यो येन नोपक्रियते हेतुः स तस्य सम्बन्धियुक्तो

हिमवानिव मलयगिरेरिति भावः। एवन्तावत्पर[3]पक्षनिराकरणेन सनिदर्शनादि-
शब्दानामभिन्नविषयत्वं साधितं। त एव जडिम्नः पदमुद्वहन्तः पुनरपि पर्य्य-
नुयुञ्जते।

ननु भवतु नाम[4]सनिदर्शनादिशब्दानामभिन्नविषयत्वं। अथ कथमवसीयते।
घटपटादिशब्दानामनेकार्थविषयत्वमिति यावता रूपादिव्यतिरिक्त[5]मन्यदे-
वावयवि द्रव्यमस्ति। तदेव च घटपटादिशब्दैर्विषयीक्रियते। तथाहि विचार-
विषयापन्नः पटस्तन्तुभ्यो व्यतिरिच्यते भिन्नकर्तृकत्वात्[6] घटादिवत्। तथा
समस्तव्यस्तप्रत्ययाविषयत्वाद् गवादिवत्। नहि तन्तवः तन्तुसमुदाय इति वा पटे
प्रत्ययो दृष्टः। उपायान्तरसाध्यत्वाच्च घटादिवत्। भिन्नदेशावस्थितैश्च क्रिय-
माणत्वात्। घटादिवदेव भिन्नपरिमाणत्वाच्च। वकुलामलकबिम्बादिवत्। अतश्च
20b पूर्व्वोत्तर कालभावित्वाद् बीजाङ्कुरादिवत्। अथवा पटादन्ये तन्तवस्तत्कारणत्वात्
तुर्यादिवत्। तन्तुपटयोर्वाऽन्यत्वं भिन्नशक्तिमत्वात् जलानलादिवत्। तथेदम-
परम्विचारविषयापन्नमिन्दीवरङ्गन्धादि[1]भ्योऽत्यन्तभिन्नन्तेषाम्व्यवच्छेदकत्वात्।
चैत्रादिवत्। इह यद्यस्य व्यवच्छेदकन्तत्तस्मादन्यत्तद्यथा गोपिण्डाच्चैत्र
इत्येतानि तद्व्यतिरेकसाधनप्रमाणानि सन्ति। तत्क[1]थन्तेषामभिन्नविषयत्वम्भवि-
ष्यतीति ॥०॥

तदेतदप्येषामसद्दर्शनाभिनिवेशपटलप्रच्छादितान्तःकरणानां नाल्पीयसस्तमसो
दुर्विलसितमित्याचार्य्या[2]ह। घट इत्यपि च रूपादय एवैकार्थक्रियाकारिण
एकशब्दवाच्या भवन्तु किमर्थान्तरकल्पनये (2 b 10) ति कार्य्यमित्युपस्क्रियते। नैव
किञ्चित्तस्य तादृशस्य नीलादि[3]व्यतिरेकेणानुपलक्षणादित्याकूतमस्य। यानि त्वे-
तानि तत्प्रतिपादनाय प्रमाणान्युक्तानि तान्यसिद्धतादिदोषदुष्टत्वान्नालं तद्भेद-
साधनायेति भो[4]ता (?) नामेव पुरतः छायान्दधतीति मन्यते। तथाहि नेदं ताव-
दाद्यं प्रमाणं परीक्ष्यमाणं पूर्व्वामपि परीक्षां क्षमते। यतोत्र विकल्पद्वयमाविर्भवति।
अ[5]न्यावस्थावस्थितेभ्यो वा तन्तुभ्यः पटस्यान्यत्वं साध्यते विशिष्टसंस्थानावस्थिते-
भ्यो वेति। तत्र न तावदयमाद्यः प्रकारः सहते विचारभारगौ[6]रवं। सिद्धसाधनता-
दोषानुषङ्गात्। यस्मात्समधिगतसमस्तवस्तुयाथातथ्यसुगतसमयनयसमाश्रय-
प्रवृत्तिबलासादितावदातमतयः प्रसवानन्तरनि[7]रोधभाजः सर्व्वभावाइति प्रकल्प-
यन्ति। ततश्च तेभ्योन्यत्वमिष्टमेवेति सिद्धसाध्यताप्रसङ्गोपनिपातपिशाचः
कथमिव भवन्तं न गृह्णाति। द्वितीयोपि विक[8]ल्पः तीव्रानलोपतप्त इवोपलतले
तलानि पादानां न प्रतिष्ठां समासादप[?यं]ति। हेतोः परं प्रत्यसिद्धत्वात्।
21a नहि विशिष्टस्थानावस्थितेभ्यः पटस्य भिन्नकर्तृकत्वं परं[9]प्रति सिद्धपद्धतिमवतरति

योहि तादृक्प्रकारेभ्योन्यत्वमभावादेव नाभ्युपैति स कथमिव भिन्नकर्तृकत्व-मभ्युपगमिष्यतीति। तदनन्तराभिहितमपि प्रमा[1]णेन समभिलसित [? षित]-मनोरथपरिपूरणायालं हेत्वसिद्धेः। यतः पट इति तन्तुष्वेव सन्निवेशविशेषेणा-वस्थितेषु प्रत्ययो वर्तते। तद्विविक्तरूपस्यात्यन्तमु[2]न्मिषितचक्षुषाप्यदर्शनात्स्फ-टिकादौ दृष्टमिति चेत्। एतदुत्तरत्र निषेत्स्यामः। यत्त्विदमुपायान्तरसाध्यत्वाद् भिन्नदेशावस्थितेः क्रियमाणत्वात् भिन्नपरिमा[3]णत्वात्पूर्वोत्तरकालभावित्वाद् भिन्नशक्तिमत्वाच्चेति॥

अत्र प्रथमसाधनाभिहितविकल्पदोषस्तीव्रामर्शविरक्तलोचन इवारातिस्त-त्सम्पदन्न स[4]हते॥

प्रथमे सिद्धसाध्यत्वं द्वितीये हेत्वसिद्धता।
क्षणिकत्वाद्विशिष्टानामुत्पादोभिमतो यत (:॥८)

इति सङ्ग्रहश्लोकः।

यच्चेदमुक्तं विचारविषयापं[5]न [? पन्न]मिन्दीवरमित्यादि। तदपि न सङ्ग-च्छते। यस्मादिन्दीवरस्य गन्धादय इतीन्दिवर [? इतीन्दीवर]स्वभावा गन्धादयो मधुभावनाविशेषादिकार्यनिवर्त्तन [? निर्वर्त्तन]स[6]मर्था इति यावत्। अवि-शिष्टकार्यसाधनात्मना सामान्यभूतगन्धादिशब्दैः प्रसिद्धाविशिष्टकार्यसाधना-ख्येन विशेषेण ये विशिष्टास्त एवमुच्यन्ते। न पुनरत्रान्यत्[7] किञ्चिदित्यर्था-र्णितलक्षणं द्रव्यमस्ति तस्य तादृशोऽनुपलब्धेरित्युक्तप्रायं। तथा चानेन प्रकारेण तेषान्तद्व्यवच्छेदकं भवतीति। तेषान्तद्व्यच्छेदकं च न चात्यन्तं[8] भिन्नमिति कोऽनयोर्विरोध इति। सन्दिग्धविपक्षव्यावृत्तिको हेतुः प्रतिबन्धासिद्धः। नहि दृष्टान्त-मात्रात्सिद्धिरस्ति। सर्व्वसिद्धिप्रसङ्गात्। अपि च शिलापु[9]त्रकस्य शरीरं। 21b
रूपस्य स्वभाव इत्यत्रापि शिलापुत्रकरूपयोः शरीरस्वभावव्यवच्छेदकत्वमस्तीति भेदस्तयोरपि ततः प्रसजते न च भवति। नैःस्वाभाव्यप्रस[1]ङ्गात्। तस्मा-दयमेतेनानैकान्तिकः स्फुटमेव भवद्भिरभिधानीयः। किञ्चेदमतिविकलैर्मि-थ्यादर्शनसंरागपिशाचाविष्टबुद्धिभिः किमिन्दीवरस्य गन्धादय इत्येते श[2]ब्दा(ः) पुरुषाभिप्रायव्यापारनिरपेक्षा एव वस्तुतत्वनिबन्धनाः प्रवर्त्तन्ते। किम्वा यथैव तैः प्रयुज्यन्ते तथैव वस्तुतत्वमनपेक्ष्य तमर्थमसत्कारेण प्रतिपादयन्तीति(।) य[3]द्याद्यः पक्षस्तदा सदाध्वननप्रसङ्गोऽतीतादिष्वन्यत्र च पुरुषेच्छावसा [? वशा]न्नियो-जनन्नभवेत्। न च प्रवचनान्तरभेदेष्वर्थेषु प्रवृत्तिः प्राप्नोति। न च क[4]स्याश्चि-द्वाचोऽसत्यार्थता स्यात्। अथोत्तरस्तदा।

येषाम्वस्तु वसा [? वशा] वाचो न विवक्षापराश्रया(ः)।

3a एव बहव एकार्थक्रियाकरणा एकशब्दवाच्या भवन्तु कि[10]मर्थान्तरकल्प-

---

षष्ठिवचनभेदादि चोद्यन्तान्प्रति युक्तिमत् ॥(९)

यदाहुः ॥

यद्य[5]था वाचकत्वेन वक्तृभिर्विनियम्यते ।
अनपेक्षितवाह्यार्थन्तत्तथावाचकम्वचः ।(१०)

तदा न पुरुषेच्छाबलप्रवृत्तशब्दवसा[?वशा]दर्थतत्वं व्यवतिष्ठत इति तद
वस्थं[6] सन्दिग्धविपक्षव्यतिरेकत्वं हेतोरिति। एतेनैतदपि प्रत्युक्तं विप्रतिपत्ति-
विषयापन्नाच्चन्दनादन्ये रूपरसगन्धस्पर्शा हेयत्वादयश्च[?यश्चे]ति प्रतिजानी-
महे न[7] व्यपदिश्यमाण[?न]त्वात् । शिलातुलाढकप्रसेविकावदिति। तस्मात्तद्भाव-
प्रतिपादनाय न किञ्चित्प्रमाणमस्तीति स्थितमेतत्। अस्माकन्तु तदभावप्रमाण-
222a साधकं प्रमा[8]णमेतत् । ये परस्परव्यावर्त्तमानस्वभावावस्थितिसमालिङ्गित
सरीरा[?शरीरा]स्ते व्यतिरिक्तावयविद्रव्यानुगतमूर्त्तिमात्मातिशयं नात्म-
सात्[?शात्] कुर्वन्ति । यथा बहवो भस्माधा[1]रन (?) लालाथूकादयस्तथा
च यथोपदिष्टधर्मवन्तस्तन्त्वादय इति स्वभावहेतुः। वैधर्म्येण नभःपङ्कजादयस्ते-
षाञ्च(:)स्वभावत्वात्। परस्परव्यावर्त्तमानानामपि[1] यद्येकस्वभावानभ्युपगमे तस्य
तेषु सर्व्वात्मनाऽन्यथा वा वृत्त्ययोगो बाधकम्प्रमाणं। कुतस्तद्धि युगपदनेकत्र
सर्व्वात्मना वर्त्तमानमनेकाधारस्थिताधेयव[2]दनेकत्वमात्मनोऽनुमापयतीति
कथमस्याभिन्नस्वभावता योज्यते । एकावयवोपलम्भवेलायाञ्च सकलस्य तत्र
परिसमाप्तत्वादुपलब्धिप्रसङ्गः । अनेकाव[3]यवोपलब्धिद्वारेणोपलम्भकति-
पयावयवदर्शनेपि स्यात् समस्तावयवोपलम्भद्वारेण उपलब्धौ सर्व्वकालमदर्शन-
प्रसङ्गः। तस्याम्भास्वरमध्य[4]भागानां सकृदनुपलम्भात् । एकावयवकम्पे च
सर्व्वकम्पादिप्रसङ्गश्च वाच्यः। नाप्येकदेशेन सावयवत्वप्रसङ्गात्। एकदेशा-
नाञ्चानवस्थाप्रसङ्[5]गात्। तेपि हि तस्यावयवा इति पाण्यवयववृत्तेष्वपि अन्येन
वर्त्तितव्यमित्यादिना तदन्यैकदेशाभाववानेकः कश्चिदवयवी विद्यते। तथा चा[6]-
ण्वादिसमुदाय एवास्तु कोनुरोधः स्वात्मभूतेष्ववयवेष्विति। न वा क्वचिदप्यसौ
वृत्तो न ह्येकदेशाः प्रत्येकमवयवीत्यलं प्रतिष्ठितमिथ्याप्रलापैरिति विरम्य[7]ते।

तदेवमेतत् परमतमलमालोच्यमानतीव्रतरार्क्करश्मिसंपातयोगिहिमशैलशिला-
शकलवद्विलयमुपयातीति मन्यमानः प्राह। किमर्थान्तरकल्पन(3 a 1)[8]येति।
स्यादियत्तराशापरस्य नैवानेकस्यैकार्थक्रियाकारित्वमस्तीत्यत आह। बहवोपि ही-
(3 a 1)त्यादि। किंवत्। चक्षुरादिवत्। यथा रूपालोकमनस्कारचक्षुराद[9]-

नया (।) बह्वोप्येकार्थकारिणो भवेयुश्चक्षुरादिवत् । तत्सामर्थ्यस्थापनाय तत्रैकशब्दनियोगोपि स्यादिति युक्तं पश्यामः । न च निःप्रयोजना लोकस्यार्थेषु शब्दयो[1]जना । तत्र येऽर्थाः सह पृथग्वैकप्रयोजनास्तेषां तद्भाव-

---

यश्चक्षुरादिविज्ञानमेकंर्व कुर्वन्ति तथा रूपा(द)योप्युदकधारणविशेषादिकामे- 22b
कामर्थक्रियाङ्करिष्यन्तीत्यर्थः। यतश्चैतदेवं तस्मात्तस्यैकार्थक्रियासामर्थ्यस्य
ख्यापनाय[1] तत्र रूपादावेकस्य पटादिशब्दस्य नियोगोपि स्यादिति एतद्युक्तं पश्यामः।
न केवलमेकार्थक्रियाकारित्वं तेषामित्यपिशब्देनाह। कथं युक्तमिति चेत्। एवं
मन्यते[2] केनचित्प्रयोजनेन केचिच्छब्दाः क्वचिन्निवेश्यन्ते तत्र यदनेकमेकत्रोप-
युज्यते तदवश्यन्तत्र चोदनीयं। तस्य च पृथक्कथञ्चोदनेऽतिगौरवं स्यात्। न चा-
स्यानन्यसाधार[3]णं रूपं शक्यं चोदयितुं। नाप्यस्यायासस्य किञ्चित्साफल्यं
केवलमनेन योग्यास्तत्र तेर्थाश्चोदनीयास्त एकेन वा शब्देन चोद्येरन् बहुभिर्वेति
स्वातन्त्र्यमत्र[4] वक्तुः। तदियमेका श्रुतिर्बहुषु वक्त्रभिप्रायवसा[?वशा]त्प्रवर्त्त-
माना नोपालम्भमर्हति। न चेयमशक्यप्रवर्त्तमाना इच्छाधीनत्वात्। यदि हि न
प्रयोक्तु[5]रिच्छा कथमियमेकत्रापि वर्त्तेत। इच्छायान्त्वा क एनां बहुष्वपि
प्रतिबद्धुं समर्थः। प्रयोजनाभावादप्रवर्तनमित्यपि नाशङ्कनीयं। भिन्नेष्व[6]प्ये-
कस्माच्छब्दात्प्रतीतिरतत्प्रयोजनभेदेन यथा स्यादित्युक्तत्वात् प्रयोजनस्य तस्मा-
त्सूक्तमस्माभिर्युक्तं पश्याम इति। यथा कथञ्चिद्विनैव प्रयोजनेन लोकः शब्दं[7]
प्रयुंक्ते। ततो न युक्तमेतदिति चेदाह। न च निःप्रयोजना लोकस्यार्थेषु शब्दयोजने-
(3a1)ति। न हि व्यसनमेवैतल्लोकस्य यदयमसङ्गतं यन्न प्रयुञ्जानो वा शब्दान्तः
खल्वा[8]सीत्। किन्तर्हि सर्व्व एवास्यारम्भः प्रयोजनसापेक्षः प्रयोजनञ्चेतदुक्त
मिति मन्यते तत्र प्रयोजनवत्त्वेनेति। यथा रूपगन्धरसादयः सहैकप्रयोजनाः
सङ्कलि[9]ता एककार्यकारिण इत्यर्थः। समवहितानामपि कदाचित्कस्यचिदेव 23a
कार्ये व्यापारोन्यस्य त्वौदासीन्यमिति[1] स्यादाशङ्कासंभवस्तत आह। पृथग्वेति
(3a2) (।) वा शब्दश्चार्थे। सर्व्व एव व्यापारवन्त इत्यर्थः। अन्ये त्वन्यथा
व्याख्यानयन्ति। व्याख्यानञ्चादो दूषयन्ति। तत्रैतस्मिन् शब्दैर[2]र्थं प्रत्यायन-
क्रमे येर्था रूपादयः सह पृथग्वैकप्रयोजनास्तेषां रूपादीनां संहितानां पृथुबुध्नोद-
राकारसंस्थापितानामेकं प्रयोजनं। यदुत मधूदकाद्याहरणं पृथग्वा [3]तेषामेव
प्रत्येकं स्वाकारज्ञानजननं॥ एकञ्च तत्प्रयोजनमेकत्र दृष्टं यत्तदन्यत्र नास्तीति
सहभूतानामपि कदाचिदौदासीन्यदर्शनात्सर्वेषां सव्यापा[4]रतामादर्शयितुं पृथ-
ग्वेत्यभिहितं (।) वा शब्दश्च समुच्चय इत्यन्ये। केवलमत्रैकप्रयोजना इत्यभिधाना-

स्थापनाय ह्येकशब्दो नियुज्यते यदि किं स्यात् । तदर्थक्रियाशक्तिस्थापनाय नियुक्तस्य समुदायशब्दस्यैकवचनविरोधोपि नाऽ[2]स्त्येव (।) सहितानां सा शक्तिरेका न प्रत्येकमिति । समुदायशब्द एकस्मिन् समुदाये वाच्ये एकवचनं घट इति । जातिशब्देष्वर्थानां प्रत्येकं सहितानाञ्च शक्तिर्नानैका

---

त्सर्वेषान्तथाभावप्रतीतिरस्त्येवेति व्यर्थम्पृ[5]थग्वेति स्यात् न चायं शब्दार्थ इति यत्किञ्चिदेतत् । तैः प्रकरणं न लक्षितं तथा ह्यत्र समुदायशब्दस्यैकवचनप्रवृत्यविरोधः कथयितुमारब्धः । तत्र कः प्रस्तावः पृथग्वेत्यभिधानस्य ॥

केवलं रूपादिशब्दश्चायञ्जातिशब्दः । तत्र चान्यादृश्येव प्रक्रिया भविष्यति ।
यस्त्विदमुक्तं केवलमत्रैकप्रयोजना इत्यभिधानात्सर्व्वे[7]षां तथाभावप्रतीतिरस्त्येवेति
तदपि न युक्तिसङ्गतं । तथाहि परबलपराजयोद्यतानामेकप्रयोजनवत्वेपि न तत्र सर्व्वे
व्यापारवन्तो भवन्ति । तद्वदत्रापि भ[8]वेत् । अत एव च स्यादाशङ्कासम्भव इति
व्याख्यातं । यदा तु सर्व्वेषामेव सव्यापारताख्यापनाय पृथग्वेत्येतदुच्यते तदाऽपह्नु
23b र(?)तमुत्सार्यते । तदेतेनैवाशब्दार्थ[9]त्वमपि प्रत्युक्तमिति यत्किञ्चिदेतदेव ।
अस्तु वैतदपि व्याख्यानं यदि कथञ्चिद्व्यवस्थापितुं पार्यते । तेषामेवं विधा-
नामर्थानान्तस्यैकार्थक्रियाकारिणो भावस्य ख्यापना[1]यैकोघटादिशब्दो यदि
नियुज्येत तदा किं स्यान्न कश्चिद्दोषः स्यात् । गुण एव तु केवलो लभ्यत इत्याह (।)
तदर्थक्रियास[?श]क्तेरभिन्नाया(ः) ख्यापनाय नियुक्तस्य समुदायश[2]ब्दस्यैकवचन-
विरोधोपि नास्त्येव (3a2) । कुतः (।) यस्मात्सहितानां सा शक्तिरेका(3a3)-
ऽभिन्ना न प्रत्येकं न तु पृथग्भूतानामित्यर्थः । इति तस्मात्समुदायशब्दे तस्मिन्नै-
कस्मिन्घटादौ[3] समुदाये वाच्ये एकवचनं घट इति भवतीति शेषः । स्यादिति वा
वक्ष्यमाणं क्रियापदं । नन्वयङ्घटादिशब्दो गवादिशब्दवज्जातिशब्दस्तत्कथमे-
तदु[4]क्तमिति चेत् । सत्यं समुदा(या)न्तरवृत्यपेक्षया जातिशब्दोयं रूपादिसमु-
दाय्यपेक्षया तु समुदायशब्दोपीत्यभिसन्धेरदोषः । तथाहि त्रय्येवगतिः श[5]ब्दा-
नाङ्केचिज्जातिशब्दा एव । यथा सुखादिशब्दाः सुखादेरनवयवत्वात् । केचित्तु
समुदायशब्दा एव यथा विन्ध्यहिमवत्सुमेर्वादिशब्दाः । तज्जातीयस[6]मुदाया-
न्तराभावात् । अपरे पुनर्जातिसमुदायशब्दाः । यथैत एव घटादिशब्दाः समुदाया-
न्तरसमुदाय्यपेक्षयेति । एवन्तावत्समुदायशब्देषु वचनप्रवत्यवि[7]रोध उक्तः ।
अथ कथञ्जातिशब्देष्वित्याह । जातिशब्देष्वित्यादि (3a3) । अर्थानां घटा-
दीनां प्रत्येकं सहितानाञ्च शक्तेः कारणात् नानाशक्तिरेका च । एतदुक्तं भवति
24a यस्मादेको[8]पि वृक्षो गृहकरणाद्यर्थक्रियानिवर्त्तने[?निर्वर्त्तने]पि योग्यो बह-

च शक्तिरिति । नानै[3]कशक्तिविवक्षायां बहुवचनमेकवचनञ्चेच्छातो (—) वृक्षा वृक्षं इति स्यात् । यद्येष नियमो (—) *बहुष्वेवबहुवचनमेकस्मिन्नेकवचनमिति* ( *पाणिनिः १।८।२१* ) । अस्माकन्तु सांकेतिकेष्वर्थेषु संके[4]तवशाद्व[? शा]त्तौरि[? तावि]त्यभिनिवेश एव (।) नानेको रूपादिरेकशब्दोत्थापने शक्त इति चेत् । किम्वै पुरुषवृत्तेरनपेक्षाः शब्दानर्थाः स्वयमुत्थापयन्ति, आहोस्वित्पुरुषैः श[5]ब्दा व्यवहारार्थमर्थेषु नियुज्यन्ते । स्वयमुत्थापने हि भावशक्तिरशक्तिर्वा चिन्त्येत (।) न च तद्युक्तं । पुरुषैस्तेषां नियोगे यथेष्टं

---

वोपि वृक्षाः । ततश्च तेषाङ्केवलानामपि योग्यत्वादनेका शक्तिः समवहितानामपि योग्यत्वादेका शक्तिरेकप्रत्यवमर्शप्रत्ययनिबन्धनत्वेनैकत्वोपचारात् । यतश्चैव[1]मिति तस्माद्यथाक्रमं नानाशक्तिविवक्षायां सत्यां बहुवचनमनेकत्वाच्छक्तेर्वृक्षा इति भवति । एकशक्तिविवक्षायान्तु एकत्वाच्छब्द एकवचनमुक्त इति स्यात् । त[2]दा यद्येष नियमो भवद्भिरसद्ग्रहग्रहावेशव्याकुलितचेतोभिरिष्यते । बहुष्वेव वाच्येषु बहुवचनं भवति । एकस्मिन्नेव चैकवचनमिति । तदनेन यदाप्येतद्द[3]र्शनमाश्रीयते बहुषु (बहु)वचनम्भवति । द्व्येकयोर्द्विवचनैकवचने (पाणिनिः १।४।२२) इति तदापि न कश्चिद्दोष इति दर्शयति । भवतान्तु कथमित्याह । अस्माकमि (3a4) त्यादि ।[4] संकेतबसा[? बशा]च्छब्दानाम्बहुवचनान्तानान्दाराः सिकताः पादाः । गुरव इत्यादिनाऽसत्यपि बहुत्वेऽभिधेयस्य वृत्तिः ॥

तथासत्यप्यनेकत्वे षण्णगरी[5] षट्पू (?) लीवनमित्यादिनैकवचनान्तानाम्वृत्तिरित्यनभिनिवेश एव । को हि नाम सचेतनः पुरुषाभिप्रायमात्राधीनवृत्तिषु शब्देष्वभिनिवेशं कर्त्तुमु[6]त्सहत इति भावः । परपक्षं पूर्वपक्षयति । नानेको रूपादिरेकशब्दोत्थापने समर्थ इति चे (3a5) दिति । नहि अनेकस्यैकेन सम्बन्धो युज्यत इति । किमि (3a5) त्यादिना परि[7]हारः । पुरुषाणाम्वृत्तिरिच्छा तत्रानपेक्षाः सन्तोऽर्थाः किं स्वयं शब्दानुत्थापयन्ति । आहोस्वित्पुरुषैस्ते व्यवहारार्थमर्थेषु यथा कथञ्चिन्नियुज्यन्त इति विकल्पद्व[8]यं । तत्र पुरुषैरेव ते यथेष्टं नियुज्यन्तेऽन्यथाऽतीताजातयोर्दर्शनान्तरभेदिष्वन्यत्र वा नियोजनन्न भ[9]वेदिति भावः । ततश्च स्वयं 24b
(3a6) पुरुषेच्छाऽनपेक्षाणामर्थानां शब्दोत्थापने सति भावस्य शक्तिरसक्ति[? शक्ति]र्वा चिन्त्येत नामैक इत्यादिना । अस्त्येव तर्हि स्वयमुत्थापनमिति चेदा[1]ह । न च तद्युक्तं (3a6) । अनन्तरोक्तात् कारणत्रयादित्यभिप्रायः । तस्मात्पुरुषैस्तेषां शब्दानां नियोगोर्थेषु विनाप्येकत्वादिना ते पुरुषाः यथेष्टमेकत्रापि बहुवचनान्तम[2]नेकत्राप्येकवचनान्तं शब्दं नियुञ्जीरन्निति कस्तत्र तेषु शब्देषूपालम्भो नानेको

नियुञ्जीरन्निति कस्तत्रोपलम्भो निमित्तञ्च नि[6]न्दायास्यो(?)क्तमेव। अपि च यदि न रूपादीनामेकेन शब्देन सम्बन्धः (।) कथमेकेनैषामाश्रयाभिमतेन द्रव्येण सम्बन्ध इति केवलमयमसद्भूताभिनिवेश एव ।

न वयमे[7]कसम्बन्धिविरोधादेकं शब्दं नेच्छामोऽपि त्वभिन्नानां रूपादीनां घटकम्बलादिषु नानार्थक्रियाशब्दविरोधात्त एकरूपाः समुदायोत्तरासम्भाविनीमर्थक्रियामेव न कुर्युः। तेन तत्प्र[8]काशनायैकेनापि शब्देनोच्येरन् । भवतु नाम कस्यचिदियं वाञ्छा (—) भवेयुरेकरूपा रूपादयः सर्वसमुदायेष्विति । किमिदं परस्परविविक्तरूपप्रतिभासाध्यक्षदर्शनमेनामुपेक्ष[9]ते । अनिष्टञ्चेदं रूपादीनां प्रतिसमुदायं स्वभावभेदोपगमात् ।

---

रूपादिरेकशब्दोत्थापने समर्थ इत्ययं नैव कश्चित् केवलमतिबहुलव्यामोहविजृम्भितमिति मन्यते। स्यान्मतङ्किमित्येकं शब्दमनेकत्र नियुञ्जत इत्याह। निमितञ्च नियोगस्योक्तमेवेति (3a6) तत्सामर्थ्यख्यापनाय तत्रैक[4]शब्दनियोगोऽपि स्यादित्यत्रावसरे। उपचयमाह। अपि चे(3a7)त्यादिना। आश्रयाभिमतेनेत्यवयविद्रव्येण। तेषान्तत्र समवायसम्बन्धेन सम्बन्धात्। क[5]थं सम्बन्धो नैवानेकस्य एकेन सह सम्बन्धो विरोधाभ्युपगमात्। अन्यथैकेन शब्देनापि सह प्राप्नोतीत्यभिसन्धिः। परः प्राह। न चे(3a7)दयमेकेन स[6]ह सम्बन्धविरोधात् कारणादेकशब्दं रूपादिषु नेच्छामः। किन्त्वभिन्नानामविशिष्टानां रूपादीनांघटकम्बलपर्यङ्कादिषु। नानाविधा येयमर्थक्रिया जलधा[7]रणप्रावरणादिस्तस्या विरोधः। तथा च तत्सामर्थ्यख्यापनाय शब्दस्य विरोधात्। तेषाञ्चाभेदस्तदाश्रय-
25a द्रव्यभेदाभावात्। एतदेव स्फुटयति। ते रूपादय ए[8]कस्वभावाः सन्तः समुदायान्तरे कम्बलादौ येयमसम्भाविनी उदक धारण विशेषाद्यर्थक्रिया तामेव कुर्युस्तेन कारणेन तस्या अर्थक्रियायाः प्रकाशना[1]येमामेतेऽर्थक्रियां न ते तदसम्भाविनीमर्थक्रियाङ्कुर्वन्ति (।) यथा त एव कम्बलग[2]ता रूपादयः सजातीयेभ्यः। तथा च घटगता अपि रूपादयः कम्बलगतेभ्यो रूपादिभ्योऽविशिष्टस्वभावा इति व्यापकानुपलब्धिः। एवमन्यत्रापि[3] योज्यमितीयं पूर्व्वपक्षरचना। अत्रोत्तरमाह। भवतु नामेत्यादिना (3a9)। तदनेन हेतोरसिद्धिमुद्भावयति। अयमत्रार्थो नहि रूपादीनाङ कम्बला[4]दिष्वभेदोस्ति। परस्पररूपविविक्तानामेव प्रत्यक्षप्रमाणपरिच्छेद्यत्वात्। एवञ्च सतीदं प्रत्यक्षं किमेनाम्वाञ्छामुपेक्षते। किम्प्रश्ने क्षेपे वा[5] नैव क्षन्तुमर्हत्यपाकरोतीति। किञ्चानिष्टञ्चेद(3a10)मस्माभिर्घटकम्बलादिष्वभिन्ना रूपादय इति कुतो

यद्यन्यत्र च रूपादिभ्यो घटादीनामेकः स्यात्। अस्तु तस्य प्रत्यक्षस्य

---

रूपादीनाम्प्रतिसमुदायत्वे हेतुबलादनपेक्षितद्रव्याणां स्वभेदाभ्युपगमात्। तद-
नेनाभ्युपगमद्वारेणाप्यसिद्धताञ्चोदयति। पूर्व्वेण प्रत्यक्षद्वारेणेति विशेषः।
पुनरपीर्ष्यालुः परः प्रा[7]ह। यद्यन्य एव रूपादिभ्यो घटः स्यात् किं
स्यादिति (।) न कश्चिद्दोषः स्यादित्याकूतं। न वयं मात्सर्यात्तं नेच्छामः।
किन्तु भवत्येतावत्त्वत्र वक्तव्यस्तीत्याह। तस्यावय[8]विनः प्रत्यक्षस्य सतः
(3a10) चक्षुः स्पर्शनेन्द्रियग्राह्यतयाभ्युपगतत्त्वात्। अरूपादिरूपस्य
(3a10) रूपगन्धादिस्वभावरहितस्येत्यर्थः। गुणद्रव्ययोर्भेदाभ्युपगमात्॥[9] 25b
तद्विवेकेन रूपादिविवेकेन बुद्धौ चक्षुः स्प(र्श)नेन्द्रियजायां प्रतिभासने किमा-
वरणन्न कश्चित्प्रतिबन्ध इत्यर्थः। न च कश्चिदत्यादरेणाप्रतिहतकरणोपि नि[1]-
रूपयन्नीलमधुरसुरभिकर्क्कशादिव्यतिरेकेण तद्रूपम्विविक्तरूपं घटादिद्रव्य-
मुपलब्धुमीश इति मन्यते। अविद्धकर्णस्त्वाह (।) रूपाद्यग्रहेपि द्रव्यग्र[2]हणमस्त्येव
यतो मन्दमन्दप्रकाशेऽनुपलभ्यमानरूपादिकं द्रव्यमुपलभ्यतेऽनिश्चितरूपं गौरश्वो
वेति। ननु च तत्रापि संस्थानमात्रमुपलभ्यते। सत्यमुप[3]लभ्यते न तु तद्रूपा-
द्यात्मकं। रूपाद्यात्मकत्वे वा नीलपीतादिविशेषग्रहणप्रसङ्गः। तथायस्कञ्चु-
कान्तर्गते पुरुषे पुरुषरूपाद्यग्रहे[4]पि पुरुषप्रत्ययो दृष्टः। रात्रौ च वलाकाव्यामुक्त
रूपाद्यग्रहेपि पक्षिप्रत्ययो दृष्टः। तथानीलाद्युपधानभेदानुविधायिनः स्फटिकम[5]णेः
स्फटिकरूपाद्यग्रहेपि स्फटिकप्रत्ययः। तथा कषायरूपेण पटरूपाभिभवे पटरूपाद्य-
ग्रहेऽपि पटप्रत्ययो दृष्ट इति। तदेतत्स[6]र्व्वमस्यानल्पकालोपचितकुदर्शनाभ्या-
सोपजातबुद्धिमान्द्यविजृम्भितमेव प्रकटयति वचः। तथाहि यत्तावदिदमुक्तं मन्द-
मन्दालोके रात्रौ च नीलाद्युपधान[7]सद्भावे च तद्रूपाद्यग्रहेपि द्रव्यमुपलभ्यत इति
तत्र वक्तव्यं कीदृशं तत्र द्रव्यमुपलभ्यत इति। दृश्यत एव तद्यादृशमुपलभ्यत इति
चेत्। ननु श्यामरूपं[8] मन्दमन्दालोके रात्रौ च तत्र तदपुलभ्यते उपधानं रूपञ्च।
न च तद्रूपन्तत्। ताद्रूप्येऽनन्तरोदितपक्षक्षयप्रसङ्गात्। तत्समीपपार्श्ववर्त्तिभिश्च
तथानुप[9]लम्भात्। न चाप्यण्या [? न्या]कारेण बोधेन वस्तुनोऽवगतिः यस्य कस्य- 26a
चिज्ज्ञानस्य सर्व्ववस्तुपरिच्छेदकत्त्वप्रसङ्गात्। तस्माद् भ्रान्तमेतत् ज्ञानम्भ्रान्ति-
बीजात्स्वोपादानादनादि[1] कालीनान्निर्विषयमेव तथा प्रतिभासि द्विचन्द्रादिप्रत्यय-
वदुपजायते (।) निर्विषयत्त्वेपि प्रतिनियतदेशकालभावि भवति। स्वोपादान-
वासनाप्रबोधकबाह्या[2]धिपतिप्रत्ययापेक्षना[ ? णा ]त्। द्विचन्द्रादिज्ञानवदेव।
भ्रान्तत्त्वेप्यर्थाविष[ ? स ]म्वादो विशिष्टाधिपतिप्रत्ययसद्भावात्। मणि-

3b सतोऽरूपादिरूपस्य[10] तद्विवेकेन बुद्धौ स्वरूपेण प्रतिभासने किमावरणं।

---

प्रभायां मणिभ्रान्तिरिव। न चार्थाविसम्वाद[3]नादेवास्य सविषयत्वं युक्तमनु
मानेन व्यभिचारात्। मणिभ्रान्त्या च। तदेव द्रव्यन्तथा गृह्णाति ततोन्यस्य निर्वि-
षयत्वमिति चेत्। ननु न तद् द्रव्यन्त[4]द्रूपन्न वान्याकारानुस्यूतः प्रत्ययोऽन्य-
स्य परिच्छेदक इत्युक्तं। एवञ्च सति सद्विषयत्वे सत्यपेक्षेपि सद्विषयत्वमस्त्येव।
तथा हि समाप्येतच्छक्यम्वक्तुं[5] त एव नीलादयस्तथा प्रतिभासन्त इति। असति
भ्रांतिसन्देहकारणे सालोकावस्थायां योग्यदेशावस्थाने च निरुपधानावस्थायाञ्च
नोपलभ्यते[6] (।) तत् द्रव्यमनात्मरूपप्रतिभासि विवेकेनान्यदा तु सति भ्रान्ति-
सन्देहकारणे निशान्धकारावच्छादितलोचनावस्थायां दूरदेशावस्थाने सोपधा-
नावस्थायाञ्च तद[7]न्याकारविवेकेन प्रतिभासत इति कोन्यो भौतिकाद्वक्तु-
मर्हति। अयस्कञ्चुकान्तर्गते पुरुषप्रत्ययो न प्रत्यक्षः। किन्तर्हि (।) लैंगिकः।
तथा हि पुरुषश[8]रीरावयवसमाश्रयबलोद्भूतविशिष्टसंस्थानावस्थितकञ्चुक-
दर्शनात्कार्यलिंगज्ञानात् सम्बन्धस्मरणापेक्षिणः कारणभूते तथाविधे पुंसि
26b पुरुषोयमित्यनन्तर[9]मेव प्रत्ययः समुद्भूतिमासादयति। अत एव चास्पष्टाकारा सा
प्रतीतिः कश्चायमिति संशयश्च भवति। तथाविधसंस्थानस्य च कञ्चुकस्योत्पत्तेः
पुरुषरूपादय ए[1]व हेतवो भवन्ति नत्वन्यदवयवि द्रव्यं। तस्यासिद्धेरसिद्धस्य च
कारणत्वाभ्युपगमायोगात्। रूपादिभिस्तु प्रत्यक्षानुपलम्भाभ्याङ्कार्यकारणभाव-
सिद्धेः। तेषा[2]मेव केवलानान्तथा सन्निविष्टानामुपलम्भात्। पटे तु कषायमञ्जिष्ठा-
दिसम्पर्कादर्थान्तरमेव केवलन्ततथा जातमीक्ष्यते। ननु नानारूपयोर्द्रव्ययोः सं[3]सर्गा-
दविभागात् तथोपलम्भः। पुनस्तद्द्रव्यसंस्थानस्थितिकारणविच्छेदात्तन्निवृत्तिः।
तदुपादानकारणापेक्षिणश्च जलपावकादेरपरोत्पत्तिरिति[4]। एतेनायोगोलक-
तद्रूपग्रहणेपि तत्प्रत्ययो दृष्ट इत्येतदपि प्रतिस्फुटं। तदेवं द्रव्यस्य प्रत्य-
क्षत्वासिद्धेर्यदुक्तङ्गवाश्वमहिषवराहमातङ्गा[5]दिमत्यधिकरणभावापन्ना रूपादि-
व्यतिरिक्ता इत्येव घोषणा। ऐन्द्रि(यक)त्वे सति समस्तरूपादिग्राहकवाक्येन्द्रियान-
वच्छेद्यत्वात्प्रीत्यादिवदिति त[6]दपहस्तितं। प्रयोगाः पुनः। यद् दृश्यं सत्तद्व्यतिरेकेण
नोपलभ्यते तत्ततो भिन्नन्नाभ्युपेयन्नास्तीति वाभ्युपगन्तव्यं। यथा नरशिरसि
विषाणन्नोपलभ्यते च दृश्यं[7] सन्नीलादिषु तद्व्यतिरेकेण सामान्यविशेषसंयोग-
विभागपरत्वापरत्वादिकमिति स्वभावानुपलब्धिः। नास्य सिद्धिः। दृश्यत्वेन
स्वयमभ्युपगमात्। तथा[8]रूपाद्यर्थपञ्चकव्यतिरिक्तत्वेनोपगतं द्रव्यन्नचक्षुःप्रत्यया-
वसेयमुपलब्धिलक्षणप्राप्तत्वेनोपगतत्वे सति नीलादिवस्तुरूपविरहात्। शब्द

प्रतिभासमानाश्च विवेकेन प्रत्यक्षार्था दृश्यन्तेऽपृथग्देशत्त्वेपि गन्धरसादयो, वातातपस्पर्शादयश्चैकेन्द्रियग्राह्यत्त्वेपी[पि । इ] दमेव च प्रत्य[1]क्षस्य

---

गन्धरसवत् । न च[9] तस्मादव्यतिरिक्त एवायं तत्र चायन्दोष इत्यागूर्याह । सोतिशयो 27a
व्यवच्छेदलक्षणस्तस्यातिशयदतोऽवस्थातुरात्मभूतोऽनन्वय इत्येकान्तेन निवर्त्तमानः । व्या[1]पकत्वाभावात्प्रवर्तमानोऽसन्नेव कथन्न स्वभावनानात्वं सुखदुःखधीरिवाकर्षति । अन्वाकर्षत्येवेत्यर्थः । प्रयोगो [? प्रयोगः] पुनर्यो यस्यात्मभूतः स तन्निवृ[2]त्तावेकान्तेन निवर्त्तते प्रवृत्तौ चासन्नेव प्रवर्त्तते यथा तस्यैवातिशयस्यात्मा । आत्मभूतश्चातिशयस्यातिशयवानिति स्वभावहेतुः । ततश्च तयोरवस्थ[3]योरवस्थातुर्न्नानात्वम्परस्परविरोधिपर्य्याध्यासितत्वात् सुखदुःखवदितिस्वभावहेतुरेव । न वा सावतिशयोऽनन्वयः प्रवर्त्तते निव[4]र्त्तते वाऽतः पुर्वस्मिन् प्रमाणे साध्यविकलत्वन्दृष्टान्तस्य । उत्तरत्र त्वसिद्धिर्हेतोरिति चेदाह । सान्वयत्वे चातिशयस्य निवृत्तिप्रवृत्योरं[5]गीक्रियमाणे का कस्य निवृत्तिः प्रवृत्तिर्वेति (4b4) । नैव काचित् कस्यचिन्निवृत्तिः प्रवृत्तिर्वा । सर्वस्य सर्वदा सत्वात् । तथा च सर्वं सर्वत्र समुपयु[6]ज्येतेत्यादिना पुरोनुक्रान्तो दोषोनुपयुज्यत इत्यभिप्रायः । उपचयमाह । यदि च कस्यचित् स्वभावस्यातिशयाख्यस्य प्रवृत्तिर्निवृत्तिर्वेति स्वयमभ्यनुज्ञा[7]यते त्वया । एकातिशयनिवृत्याऽपरातिशयोत्पत्या व्यवहारभेदोपगमादित्यभिधानात् तदेतदेव परस्तथागतवचोऽभ्यासोपजातावदातमति[8]र्ब्रुवाणः । नानुमन्यते भद्रमुखेण [? मुखेन] भवेदेवं यदि यथामया प्रवृत्तिनिवृत्ती अभ्यनुज्ञायेते तथा
तेनापि । यावतास्य निरन्वयोपजननविनाशोपगमसम[9]त्वाद् द्रव्यस्यालोकनीलादि- 27b
वत्तद्व्यतिरेकेणाप्रतिभासनमभिन्नेंद्रियग्राह्यत्वाद्वा तद्वदेवेत्यतआह । प्रतिभासमानाश्च विवेकेने(3b1)दं नीलमिदं सुरभि मधुरं कर्कशमिद[1]मिति चेति प्रत्यक्षा अर्था दृश्यन्तेऽपृथग्देशत्वेपि सति के ते रूपादयः । लोकप्रसिद्ध्या चेदमुक्तन्न तु तेषामभिन्नदेशत्वमस्ति । सप्रतिघा दश रूपिण (अभिधर्मकोशे १।२९) इति वचनात् । त[2]था ऽभिन्नेन्द्रियग्राह्यत्वेपि वातातपस्पर्शादय (3ba) इति यथाक्रमं चैतदुत्तरं । अनेनैकान्तिकत्वं हेतोरुद्भावयति । उपेत्य च धर्मिसम्बन्धं अभिन्नेन्द्रियग्राह्यत्वस्य व्यभि[3]चार उक्तो नत्वसावस्यास्त्येकदेशासिद्धेः । कथं । यतो न सुरभिमधुरादयो द्रव्यग्राहकेन्द्रियग्राह्याः । सार्वेन्द्रियत्वप्रसङ्गाद् द्रव्यस्य । आलोकनीलादीनां[4] त्वभेद एव यतः प्रदीपादिसन्निधानात् प्रकाशरूपा एव तथाविधस्वभावाध्यासितवपुषस्ते समुद्भवन्ति न तु तेषां भेदोऽस्तीति साधनविकलताऽपि दृ[5]ष्टान्तस्येति मन्यते । तस्मादस्य प्रत्यक्षत्वमभ्युपगच्छद्भिर्नं बहिरवश्यं रूपादिविवेकेन प्रति-

प्रत्यक्षत्त्वं यदनात्मरूपादिविवेकेन स्वरूपस्य बुद्धौ समर्पणं। अयं पुनर्घटादेरमूल्यदानक्रयीयः स्वरूपञ्च नोपदर्शयति प्रत्यक्षताञ्च स्वीकर्त्तुमिच्छति। एतेन बुद्धिशब्दादयोपि व्याख्या[2]ता यदि तैस्तत्साधनमिष्येत। न च प्रत्यक्षस्यानभिभवे रूपानुपलक्षणं, येन तत्साधनाय लिङ्गमुच्यते। अप्रत्यक्षत्वेप्यप्रमाणस्य सत्तोपगमो न युक्तः। तन्न रूपादिभ्योन्यो

---

भासनमभ्युपगन्तव्यमन्यथा प्रत्यक्षत्वासिद्धेः। कुतो य[6]स्मादिदमेवेत्यादि सुबोधं। अयम्पुनर्घटादिर्भवद्भीरूपादिव्यतिरेकेणाभ्युपगतः। को सावमूल्यदानक्रयीयः। तदेतेन नायमीदृशो लोकव्यवहारपद्धति[7]मवतरतीत्याचष्टे। स स्वरूपञ्च नोत्कर्षेण दर्शयत्यप्रतिभासमानत्वाप्रत्यक्षताञ्च स्वीकर्त्तुमिच्छति दार्शनं स्पार्शनञ्च द्रव्यमिति सिद्धान्ते पाठात्। इत्येतदात्मनि[8]रन्तरप्रेमाणः सुहृदः प्रत्येष्यन्तीत्यध्याहर्त्तव्यं। मूल्यदानक्रया विद्यन्तेस्येति मूल्यदानक्रयी न तथेति वृत्तिः। अथवा
28a क्रेतुं शीलं यस्यासौ क्रयी मूल्यदानेन क्र[9]यी न तथा। कथमेतदित्याह। यः प्रत्यक्षता
(3b2)मित्यादि। मूल्यदानञ्चात्र स्वरूपार्पणमित्युपहसति।

ननु चैको घट इति प्रत्ययव्यपदेशसद्भावाद्रूपादिवत् तदस्त्येव। तत्कथमस्यासत्वमिति चेदाह बुद्धिशब्दादयोपि व्याख्याता न च सर्व्वं इत्यादिना। आदिशब्देन तद्भेदाभेदोपादानं। यदि तैर्बुद्धिव्यपदेशादिभिस्तस्य साधनसिद्धि[2]रिष्यते। स्यादेतत्प्रतिभासमानमपि द्रव्यं लवणरसाभिभवे खण्डरसवन्नोपलक्ष्यते। ततस्तत्प्रसाधनाय लिङ्गमुच्यत इत्यत आह। न च प्रत्यक्षस्यार्थस्य रूपानुप[3]लक्षणं (3b3) युक्तं। द्रव्यान्तरेणानभिभवे सति। अभिभवे तु युक्तमेव। यथा खण्डादिरसस्य। न चात्र केनचिदभिभवोस्ति। नीलादिभिरस्तीति चेति। न महत्यने[4]कद्रव्यवत्ताद्रूपाच्चोपलब्धिः। तथा रूपसंस्काराभावाद्वा वानुपलब्धिरित्युक्तं। तस्य चानुपलक्षणे तेषामप्यनु(प)लक्षणप्रसङ्गः। ततश्च स[5]र्व्वपदार्थानामनुपलक्षणाल्लोकव्यवहारोच्छेद एव भवेदिति मन्यते। येनानुपलक्षणेन तस्यावयविनः साधनाय लिङ्गमुच्यते। तद्भावसाध[6]नञ्च लिङ्गमभ्युपगम्येत तद्भाष्यते न तु तद्गमकं लिङ्गं किञ्चिदप्यस्ति। यथोक्तम्प्राक्। तत्प्रतिपादकप्रमाणाभावेपि तदस्त्येवेति चेदाह (।) अप्रत्यक्षत्वेप्यप्रमाण[7]स्य सत्वोपगमोऽयुक्त (3b3) इति। अप्रमाणस्येत्यनेन प्रत्यक्षव्यतिरिक्ततत्प्रसाधकप्रमाणाभावमाह। यस्य सद्भावसाधकं प्रमाणं नास्ति न तदस्तीत्यङ्गीकर्त्त[8]व्यं। यथा-
नभस्तले कमलं नास्ति चावयविनोऽस्तित्वसाधकं प्रमाणमिति सद्व्यवहारप्रति-
28b षेधफलामनुपलब्धिं मन्यते। एवं विस्तरेणैकद्रव्याभावं प्र[9]तिपाद्य प्रकृतमुप-

घटः। एवन्ताव[3]न्न बुद्धिव्यपदेशाभ्यां सत्ताव्यवहारः सत्ताभेदाभेदव्यवहारो वा। अत एव न *तद्विपर्ययाद्विपर्ययः*। अर्थक्रियातस्तु सत्ताव्यवहारः स्यात्। न सत्ताभेदाभेदव्यवहार (:,) एकस्या[4]प्यनेकार्थक्रियादर्शनात्। यथा प्रदीपस्य विज्ञानवर्त्तिविकारज्वालान्तरोत्पादनानि। अनेकस्यापि चक्षुरादेरेकविज्ञानक्रियादर्शनात्। न क्रमाऽर्थक्रियाभेदमात्रेण सत्ताभे[5]द इति किन्तर्हि [? न्तर्] ह्यदृष्टार्थक्रियाभेदेन। या अर्थक्रिया यस्मिन्नदृष्टा पुनर्दृश्यते सा सत्ताभेदं साधयति। यथा मृद्यदृष्टा सत्युदकधारणाद्यर्थक्रिया घटे दृश्यमानाऽदृष्टापि[6] तन्तुषु प्राव(र)णाद्यर्थक्रिया पटे दृश्यत इति सत्ता-

---

संहरति। तदित्यादिना। मूलप्रकरणमपि निगमयति। एवन्तावदि(3b3)-त्यादिना। अत एव न तेषाम्बुद्ध्यादीनाम्विपर्ययात्तेषां सत्तादीनाम्वि[1]पर्ययोऽभावः। योहि यस्य भावमेव न साधयति स कथमिव वर्त्तमानस्तदभावं साधयतीत्याकूतं। यदि नाम बुद्ध्यादयः सत्ताम्भेदाभेदौ वा न साधयन्त्यर्थक्रि[2]या तु तान्साधयिष्यतीत्यत आह। अर्थक्रियातस्तु सत्ताव्यवहारः स्यादि(3b4)ति तल्लक्षणत्वात् सत्त्वस्येति भावः। अनेनावयोरत्र साम्यमेवेति दर्शयति। अन्य[3]त्र तु विवाद इत्याह। न सत्ता-भेदाभेदव्यवहार (3b4) इति। कुत एकस्याप्यनेकार्थक्रियादर्शनात्। तत्र नैक-प्रत्ययजनितं किञ्चिदस्ति तत्कथ[4]मेवमुच्यते। सत्यमेतदेकं तु बह्वीषु सामग्रीषु वर्त्तत इत्यनेकार्थकृदित्युच्यते। यदाह॥

न किञ्चदेकमेकस्मात् सामग्रचा सर्व्वसम्भवः।
एकं[5] स्यादपि सामग्र्योरित्युक्तं तदनेककृदिति॥ (११)

किम्वत्। यथा प्रदीपस्य विज्ञानस्य वर्त्तिविकारस्य ज्वालान्तरस्य च स्वपर-सन्तानसम्बन्धिक्षणान्तरस्यो[6]त्पादनानि तदेवं सत्ताभेदव्यवहाराभावे कारणं। कथमेकमनेकं कार्यमुत्पादयतीति चेति। एकस्यैव ईदृशस्यानेककार्यजननात्तुर्या-तिशयक्रोडी[7]कृतं रूपवतः स्वहेतुभ्यः संजातत्वादिति भावो न्यायतत्त्वविदः। तथानेकस्यापि चक्षुरादेरेकविज्ञानक्रियादर्शनात्। अभेदव्यवहाराभावे कार[8]-णमेतत्। कणभुग्मतविपर्यासितधियस्त्वाहुः। न ब्रूम इत्यादि। किन्तर्ह्यदृष्टार्थ क्रियाभेदेन सत्ताभेद इति वर्त्तते। तदेव व्यनक्ति। यार्थक्रिया(3b6)मध्वाद्या[9] 29a
हरणादिलक्षणा तस्मिन्घटादावदृष्टा सती पुनर्दृश्यते। अन्यत्र घटादौ। सैवम्विधा सत्ताभेदं साधयति। तेषां घटादीनामनेन व्याप्तिः कथिता। किमिव।[1] यथा पटेऽदृष्टा सत्युदकधारणाद्यर्थक्रिया घटे दृश्यमाना(3b7) सत्ताभेदं साधय-तीति प्रकृतेनाभिसम्बन्धः। दृष्टान्तकथनं चैतत्। अदृष्टा च तन्तुषु प्रावरणद्य[2]र्थ-

भेदः सिध्यति। एवमर्थान्तरं, तथाप्यवयवी न सिध्यति। यथाप्रत्ययं संस्कारसन्ततौ स्वभेदोत्पत्तेरर्थक्रियाभेदः। अ[7]रणिनिर्म्मथनावस्थादाविवाग्नेः स्थूलकरीषतृणकाष्ठदहनशक्तिभेदस्तथा यथाप्रत्ययं स्वभावो [?व]भेदोत्पत्तेस्तन्त्वादिष्वर्थक्रियाभेदः। एतेन बुद्धिव्यपदेशभेदाभेदौ व्याख्यातौ।[8]

तत्र यदुक्तमर्थक्रियातः *सत्ताव्यवहारसिद्धिर्विपर्ययाद्विपर्यय* इति,

---

क्रिया पटे दृश्यत इति (3b7) पक्षधर्मोपदर्शनमिति। तस्मात् सत्ताभेदस्तन्तु-
पटयोः सिद्ध इति शेषः। तदनेन साधनफलं सङ्कीर्तितं। स्वभावहेतुश्चायं[3] यस्मात्तद-
दृष्टार्थक्रियाकरणमात्रानुबन्धी सत्ताभेद इति। तदेतेन तन्तुभ्यः पटस्यान्यत्वं
साधयन्नर्थान्तरभूतावयविसिद्धिं मन्यते॥ आचार्यस्त्वाह॥ सिध्यत्येवं तन्तु-
पटयोः सत्ताभेद इति प्रकृतं॥ वांछितार्थसिद्धिस्तु भवतो नैवास्तीत्यभिप्रायवा
नाह। अर्थान्तरन्तथाप्यवयवी न[5]सिध्यतीति (3b7) कुत एतद्यतो यथाप्रत्यय-
मस्यां संस्कारसंततौ स्वभावभेदोत्पत्तेः कारणादर्थक्रियाभेदः प्रावरणादिलक्षणो
भवति।[6] एतदुक्तं भवति पिण्डीकृतेभ्यस्तन्तुभ्य उपादानकारणभूतेभ्यः
कुविन्दादिसहकारिप्रत्ययसन्निधानाच्च विशिष्टसन्निवेशावच्छिन्ना एव
तन्तवो जाय[7]ते। ये प्रावरणाद्यर्थक्रिया(या)मुपयुज्यन्ते। तेभ्यश्च पूर्व्वेभ्यः पटस्या-
न्यत्वमिष्टमेवास्माभिरपि। न तु विशिष्टसंस्थानावच्छिन्नेभ्य इति त्यज्यतामियमर्था-
न्तरा[8]वयविसिद्धिप्रत्याशेति। तदेतेनैवाविद्धकर्णोक्तं पूर्व्वोत्तरकालभावित्वादित्यादि
29b तत्साधनमपहस्तितं वेदितव्यं। अस्माभिस्तु विस्तरेण प्राक् प्रयुक्तमेवेति।
न पुनर्योज्यते। किम्वत् प्रत्ययवसात् [? वशात्] स्वभावविशेषोत्पत्तेरर्थकिया-
भेद (3b7) इत्याह। अरणिनिर्मथना(3b7)दित्यादि सुज्ञानं(।) दृष्टान्तं प्रदर्श्य-
दार्ष्टान्तिकमाह। तथा यथे(3b8)त्यादि[1]। अनेनैव यथाप्रत्ययस्वभावभेदेन-
यदेके चोदयन्ति। ननु च तन्तवः पट इति बुद्धिव्यपदेशभेदात्। कथमस्यान्यत्वं
नास्तीति तत्प्रतिक्षिप्तमित्याकूतवानाह[2]। एतेन बुद्धिव्यपदेशभेदौ व्याख्याता-
विति (3b8)। तत्रैवं स्थिते यदुक्तं प्राक्त्वयाऽर्थक्रियातः सद्व्यवहारसिद्धिर्भवति
विपर्ययाच्चार्थक्रिया निवृत्ते विपर्ययोऽसद्व्यवहार[3] इति सत्यमेतत्। एतावत्तु-
ब्रूमः। स एव विपर्ययोऽर्थक्रियाया* अनुपलब्धिलक्षणप्राप्तेषु न सिध्यति। तथाहि
यद्ययमुपलब्धिलक्षणप्राप्तानुप[4]लम्भो नेष्यते तदास्यार्थक्रियासामर्थ्यं नास्तीति
कथमधिगतं भवता(।) न चानुपलब्धिमात्रादिति युक्तम्वक्तुं। तस्य व्यभिचारात्।

सत्यतमेत्। स एव तु विपर्ययोनुपलब्धिलक्षणप्राप्तेषु[9] न सिध्यति। तत्र पुनरिदमनिच्छतोप्यायातं। यस्येदं सामर्थ्यमुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषय : सामर्थ्यलक्षणत्वात्सत्त्वस्येति । तथापि कोऽति-
शय: पूर्वकादस्य (।) न हि स्वभावादर्थान्तरं सामर्थ्यं तस्योपलब्धिलक्ष[10]- 4a
णप्राप्तस्य योनुपलम्भः स स्वभावस्यैवेति पूर्वकैवेयमनुपलब्धिः (।) तस्मादनेन कचित्केषाञ्चिदसद्व्यवहारमभ्युपगच्छताऽतोनुपलम्भादभ्युपगन्तव्यो न वा कचिद्विशेषाभावा[1]त्। सोन्यत्रापि तथाविधेऽविशिष्ट इति सोपि तथास्त्विति व्याप्तिः। सर्व एवंविधोऽनुपलब्धोऽसद्व्यवहारविषय इति।

---

तत्र पुनरनिच्छतो[5]प्यायातं तव। यस्येदमर्थक्रियासामर्थ्यमुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषय इति। कुतः सामर्थ्यलक्षणत्वात् सत्वस्य[6]। भवत्वेवङ्को दोष इति चेदाह। तथापि कोतिशय:(3b10) पूर्व्वकादस्माद्रुपवर्णिताद्रुपलभ्यानुपलम्भात्। अस्य सामर्थ्यानुपलम्भस्य भवत्परिकल्पितस्य। स्यात् म[7]तं स स्वभावस्यैवानुपलम्भोऽयं तु पुनः सामर्थ्यस्येत्यत आह। न ही(3b-10)त्यादि। तथा च तस्य सामर्थ्यस्य योनुपलम्भः स स्वभावस्यैव इति तस्मात् पूर्वकैव स्वभावा[8]नुपलब्धिरेवेयं सामर्थ्यानुपलब्धिः। तस्माद् दृश्यानुपलब्धिरेवासद्व्यवहारसाधनेति स्थितमेतत्। यस्माच्चैवन्तस्मादनेन वादिना क्वचिच्छश-
विषाणादावसद्व्यव[9]वहारमभ्युपगच्छता दृश्यानुपलम्भादभ्युपगन्तव्यो- 30a
ऽन्यस्य तत्प्रतिपत्त्युपायस्याभावादिति भावः। ततः सोनुपलम्भोऽन्यत्रापि सामान्यविशेषसंयोगावय[1]विद्रव्यादौ तथाविधे उपलब्धिलक्षणप्राप्ते अविशेष इति सोपि सामान्यविशेषादिस्तथास्त्वसद्व्यवहारविषयत्त्वेनास्तीत्यर्थः। स्यादेतन्नैव सामान्यविशे[2]षादिस्तथाविधोनुपलब्धोस्य सद्व्यवहारविषय इत्यत आह। न वा क्वचिच्छशविषाणादावसद्व्यवहारो ऽभ्युपगन्तव्यः। कुतो विशेषाभावादनुपलम्भस्य[3]। अयमत्रार्थो द्वयोरनुपलम्भे तन्निमित्ते तुल्येपि यद्यसद्व्यवहारः सामान्यादौ नोत्पद्यते। अन्यत्रापि तर्हि स नाभ्युपेयो विशेषहेत्वभावादि[4]त्यनेन च पूर्व्वोक्तमेव कस्य चिदसतोभ्युपगमे तल्लक्षणाविशेषादिति स्मारयति। तस्मात्सर्व्वं एवंविधो दृश्यानुपलम्भोऽसद्व्यवहारस्य वि[5]षय(4a2) इति व्याप्तिः। अनुपलब्धौ सिद्धेतिशेषः॥ ० ॥

नैव कश्चित्क्वचित्कथञ्चिदनुपलब्धोऽप्यसद्व्यवहारविषय[2] इति चेत्। सर्वस्य सर्वरूपाणां सर्वदाऽनिवृत्तेः सर्वं सर्वत्र सर्वदा समुपयुज्येत। इदञ्च न स्यात्। इदमतो नात इदमिहेदमिह नेदमिदानीमिदमिदानीं नेद-मिदमेवमिदं[3] नैवमिति कस्यचिदपि रूपस्य कथञ्चित्क्वचित्कदाचिद्वि-[?द्विविक्त]स्त्वहेतोरभावात्। अनन्वयव्यतिरेकं विश्वं स्यात् भेदाभावात्। अवस्थानिवृत्तिप्रवृत्तिभेदेभ्यो व्यवस्थेति चेत्[4] (।) नन्वत एव सर्वविषयस्या-

---

कापिलास्त्वाहुः। सर्व्वमेव सर्व्वात्मकं अन्यथा यदि मृत्पिण्डदुग्धबीजादिषु घटदध्यङ्कुराद[6]यो न विद्यन्त एव शक्त्यात्मना तदा कथं पुनस्तेभ्यस्तेषामुत्पत्तिः। नहि शशविषाणमविद्यमानन्तत्रोदेति। एवञ्च सति दृश्यः सन्ननुपलब्धोऽपि कश्चिद् घटा[7]दिः क्वचिद्देशादौ कथञ्चिच्च संस्थानविशेषादिना नैवाभावव्यवहारविषयो भवतीति तेषां मतमासङ्क [? शङ्क]ते। नैवे(4a3)त्यादिना।

एतत् साङ्ख्यपशोः कोन्यः सलज्जो वक्तुमीहते।
अदृष्टपूर्व्वमस्तीति तृणाग्रे करिणां शतम् (।१२, प्रमाणवार्त्तिके २ परि०)

इत्यभिप्रायवानाह। सर्व्वस्ये(4a3)त्यादि। यद्यदृष्टमपि तत्रास्ति तदा-
30b सर्व्व एव क्षीरादयः सर्व्वै घंटादिरूपै[0]रनुमतत्वात् तत्साध्यामर्थक्रियाङ्कुर्युरित्यर्थः। किञ्चेदमपरं न स्यादिदन्दध्यादिकार्यमतः क्षीरादेर्भवति नान्यतो जलादेः। यदि वा नातः क्षीरादेरिदं मध्वादि[1]कं तथेदङ्कुङ्कुमादिकमिह कस्मीरा [? कश्मीरा]दिदेशे नेदमिह मालवकादिदेशे यदि वा नेदं चन्दनादिकमिह। तथेदङ्कु-न्दादिकमिदानीं शिशिरसमये नत्विदमि[2]दानीन्निदाघकाले। अथवा नेदं कमलादिक-मिदानीन्तथेदं खण्डादिकमेव माधुर्यादिगुणविशिष्टं। नेदमेवङ्कटुकादिरूपं। यद्वा नेदं निम्बादिकमे[3]वमिति व्याख्यातव्यं (।) किङ्कारणमेवमेतदित्यत आह। कस्यचिदपी(4a4)त्यादि। इदमेवम्विधमधुनास्य रूपन्नास्तीति योयम्विवेको-ऽभावस्त[4]स्य हेतोरभावात्। सर्व्वस्य सर्व्वरूपाणां सर्व्वदानुवृत्तेरिति मतिः। नन्विद-मनन्तरमेव वस्तुतोऽभिहितमेव सर्व्वं सर्व्वत्र सर्व्वदा समुप[5]युज्येतेत्यत्र तत्किमिदं पुनश्चर्वितचर्व्वणमास्थीयत इति चेत्। सत्यं पूर्वं कारणगतो व्यापारः कथितो-ऽधुना तु कार्यंगत इति विशेषा[6]ददोषः। इदञ्चान्यतरमुखेण [? मुखेन] दूषण-वचनं शिष्यव्युत्पादनाय। ततश्च भेदाभावान्न विद्येते अन्वयव्यतिरेकौ यस्मिं-न्निति विग्रहः। इदमत्रास्तीत्या[7]द्यन्वयो नास्तीति व्यतिरेकः। परः प्राह (।) अवस्थेत्यादिना। एतदुक्तम्भवति। यत्र यद् व्यक्तन्तत्तत्रास्तीत्यादि व्यवह्रियते

सद्व्यवहारस्याभावान्न सम्भवन्ति। यतस्तेभ्यो व्यवस्था स्यात् । क्वचिद्विषये-ऽसद्व्यवहारोपगमे स कुत इति वक्तव्यं । न ह्यनुपलम्भादन्यो व्य[5]वच्छेद-हेतुरस्ति । विधिप्रतिषेधाभ्यां व्यवच्छेदे सर्वदानुपलम्भस्यैव साधनत्वात् । अनुपलम्भादेव तदभ्युपगमे स यत्रैवास्ति सर्वोऽसद्व्यवहारविषय इति वक्तव्यं[6] विशेषाभावात् । सर्वप्रमाणनिवृत्तिरनुपलब्धिः । सा यत्र सोऽस-द्विषय इष्ट इति चेत् । सुकुमारप्रज्ञो देवानांप्रियो न सहते प्रमाणचिन्ता-व्यवहारपरिक्लेशं[7] येन नात्रादरं कृतवान् । न ह्यनुमानादिनिवृत्तिरभावं

---

यत्र तु यन्नैव व्यक्तन्तत्र तन्नास्तीत्यतो[8]ऽयमदोष इति । नत्वि(4 a 5)त्याद्याचार्यः ।
त एवावस्थानिवृत्तिप्रवृत्तिभेदा न सम्भवन्ति तावकीने दर्शने । कुतः सर्व्वविषयस्या-
सद्व्यवहारस्याभावात् । अथापि क्वचि[9]द्विषयेऽसदव्यवहार इष्यते तदा तस्य कारणं 31a
भवद्भिर्वक्तव्यमित्याह । क्वचिदि(4 a 5)त्यादि । यदि वावश्यमनेन क्वचित्परि-
कल्पिते व्यतिरिक्तावयव्यादावसद्व्यवहारो[1]ऽङ्गीकर्त्तव्यः । स चास्य न युक्तो-
हेत्वभावादित्याह । क्वचिदित्यादि । कुतः । यस्मान्नहि अनुपलम्भादन्यो व्यवच्छे-
दस्याभावस्य हेतुरस्ति प्रसाधक इति शेषः । स च त्वया[2] नेष्टक इति भावः । कस्मा-
देवं यतो विधिना स्वभावविरुद्धोपलम्भादौ प्रतिषेधेन व्यापकानुपलम्भादौ व्यवच्छेदे
साध्येऽनुपलम्भस्यैव सर्व्वदा साधकत्वात् । अथा[3]हमप्यस्मादेवानुपलम्भाद् व्यव-
च्छेदं साधयामीति ब्रूषे तदत्रापि ब्रूम इत्याह । सोनुपलम्भो यत्रैवास्ति स सर्व्वो
ऽसद्व्यवहारविषय(4 a 6) इति वक्तव्यं ॥[4] किमिति विशेषाभावात् । तथा
च घटादि[? घटादे]रपि क्वचित्प्रदेशविशेषादावसद्व्यवहारविषयत्वं सिद्धं ।
तथाविधस्यानुपलम्भस्यात्रापि भावात् तत्किं[5] ब्रूषे । नैव क्वचित् कश्चिद् दृष्टो-
प्यसद्व्यवहारविषय इति अभिप्रायः । अन्यथा अत्रापि व्यतिरिक्तावयव्यादौ
मा भूदसद्व्यवहार इति यावत् ।

सर्व्व[6]प्रमाणनिवृत्तिरि(4 a 7)त्यादि परः । तथा चायुक्तं उक्तं । नहि अनुपलम्भादन्यो व्यवच्छेदहेतुरस्तीति । एवञ्च सति न घटस्यापि क्वचिदसद्व्यवहारविषयत्वमा[7]गमानुमानभावेन सर्व्वप्रमाणनिवृत्तेरेवाभावादिति मन्यते । कुतः पुनरिदमतिप्रज्ञाकौशलमासादितं भवतेत्याचार्योपहसति । सुकुमारप्रज्ञ (4a7) इत्या[8]दिना । न प्रसहते प्रमाणचिन्तापरिक्लेश(4 a 7)मिति सुकुमारप्रज्ञत्वे कारणं ।

ननु च किमत्रायुक्तमुक्तमस्माभिर्येनोपहससीत्याह । नही(4 a 8)त्यादि ।
आदिश[9]ब्देनागमपरिग्रहः । व्यभिचारश्च पूर्व्वमेव प्रतिपादितः । सर्व्वप्राणि 31b
प्रत्यक्षनिवृत्तिस्तर्हि गमयिष्यतीत्याह । न सर्व्वप्रत्यक्षनिवृत्तिरि(4 a 8)ति ।

गमयति व्यभिचारात् । न सर्वप्रत्यक्षनिवृत्तिरसिद्धेः, नात्मप्रत्यक्षविषय-
निवृत्तिरपि विप्रकृष्टेषु । तस्मात्स्वभावविशेषो यतः प्रमाणान्नियमेन सद्व्यव
हारं[8] प्रतिपद्यते, तन्निवृत्तिस्तस्यासद्व्यवहारं साधयति (।) तत्स्वभावसत्ता-
यास्तत्प्रमाणसत्तया इष्टेः ।

न चोपलब्धिलक्षणप्राप्तस्यार्थस्याप्रत्यक्षादन्योपलब्धिर्येनानुमा-
4b नाद्[9]स्योपलब्धिः स्यात् । न तद्रूपान्यथाभावमन्तरेणाप्रत्यक्षता(,ऽ)न्यथा-

---

कुतोऽसिद्धेः । आत्मपर[1]योरप्रतिपत्तेरित्यर्थः । न ह्यत्र सर्वेषाम्प्रत्यक्षन्निवृत्तमिति
निश्चये प्रमाणमस्ति किञ्चित् । आत्मप्रत्यक्षनिवृत्तिरेव तर्हि गमयतीति चेदाह ।
नात्मप्रत्यक्षा विशे[2]षनिवृत्तिरपी(4 a 8)ति(।)न केवलं पूर्वोक्तेत्यपि शब्दः ।
अविशेषेण निवृत्तिरविशेषनिवृत्तिः । आत्मप्रत्यक्षस्याविशेषनिवृत्तिरात्मप्रत्यक्षा
विशेषनिवृत्तरिति[3] व्युत्पत्तिक्रमः । सन्निहितसकलतदन्यकारणस्य त्वात्म-
प्रत्यक्षस्य निवृत्तिस्त्रिविधविप्रकर्षाविप्रकृष्टेऽभावङ्गमयत्येवेति कथनीयाविशेष
वि[4]प्रकृष्टवचनं । यस्मात् सर्व्वप्रमाणनिवृत्तिर्न्नासद्व्यवहारहेतुस्तस्मात् स
स्वभावविशेषस्त्रिविधविप्रकर्षाविप्रकृष्टरूपो भावो यतः प्रमाणात्सं[5]निहित-
समस्ततदन्यत्क्रियादिकारणात् प्रत्यक्षान्नियमेन सद्व्यवहारम्प्रतिपद्यते समासाद-
यति। तस्यैव यथोक्तस्य प्रमाणस्य निवृत्तिस्तस्य स्व[6]भावविशेषस्यासद्व्यवहारं
प्रसाधयति । अवधारणमनुमानावगमादिनिवृत्तेर्व्यवच्छेदाय । किङ्कारणन्तस्य
स्वभावविशेषस्य स्वभावसत्तायास्तस्य यथो[7]क्तस्य प्रमाणस्य येयं सत्ता तया व्याप्तः
कारणात् । तथाहि यत्र स तादृग्विधः पदार्थस्तत्रावश्यं तेनापि प्रमाणेन भवितव्यं ।
समर्थस्य कारणस्य कार्या[8]व्यभिचारात् । एवञ्चैतत्प्रमाणं तद्व्यापकत्वान्निवर्त्त-
मानं तामपि वृक्षवच्छिंशपां निवर्त्तयति । अनेन च यथोक्तादनुपलम्भादित्याद्युक्त-
32a मुपसंहरति स्यादेत[9]दुपलब्धिलक्षणप्राप्तमपि क्षीरादिषु दध्यादिकं न प्रत्यक्षे[1]-
णोपलभ्यतेऽपि त्वनुमानेनाशक्तादनुत्पत्तिरिति । अतो न तन्निवृत्याप्यसद्व्यवहार-
विषयत्वन्तस्येत्यत आह । न चे(4a9)त्यादि । येनान्योपलब्धित्वेनानुमाना-
दस्यो[2]पलब्धिः स्यात् । किम्पुनरन्योपलब्धिर्न युज्यत इत्याह । न चेत्यादि । यस्मादर्थे-
चकारः । तस्य रूपस्योपलब्धिलक्षणप्राप्तस्यान्यथाभावप्रच्युतिर्न्न तमन्त[3]रेणा-
प्रत्यक्षः स भावो युक्त इति शेषः । तदेतेन प्रत्यक्षमेव तस्योपलब्धिरपेक्षणीयस्य
कस्यचिद्धेतोरभावादिति प्रसाधयति । प्रयो[4]गः पुनः । यद्यदासन्निहितसकला-
प्रतिबद्धसामर्थ्यंकारणन्तत्तदा भवत्येव न चाक्षेपकारि । यथा समग्राप्रतिहत-
सामर्थ्यंकारणसा[5]मग्रीकोऽङ्कुरः । तथा च क्षीराद्यवस्थासु यथोपदिष्टपक्षधर्मवद्
दध्यादिविषयं ज्ञानमिति स्वभावहेतुः । द्वितीयसाध्यापेक्षया व्यापकवि[6]रुद्धोप-

भावे च तदेव न स्यात्। अपि च कुत इदमन्त्रौषधमिन्द्रजालं भावेन शिक्षितं यदयमजातानष्टरूपातिशयोऽव्यवधानादूर[1]स्थानस्तस्यैव तदवस्थेन्द्रियादेरिव पुरुषस्य कदाचित्प्रत्यक्षोऽप्रत्यक्षश्च, येन कदाचिदस्यानुमानमुपलब्धिः कदाचित्प्रत्यक्षं कदाचिदागमः। तस्मान्नैवानतिशयेऽमीषां प्रकाराणां विरोधा[2]त्। नानतिशय एकातिशयनिवृत्त्याऽपरातिशयोत्पत्त्या च तै(:) व्यवहारभेदोपगमात्। सोतिशयस्तस्यात्मभूतोऽनवयवे निवर्त्त-

---

लब्धिः। अन्यथा त्वन्तस्य भवत्येवातोयं हेतुरसिद्ध इति चेदाह (।) अन्यथा भावे
चेष्यमाणे तदेवोपलब्धिलक्षणप्राप्तं दध्यादि न स्यात्(4b1) प्राच्यरूपात् प्रच्यु[7]तेः।
तथा च तद्रूपतायां निरन्वयविनास [? विनाश]प्रसङ्ग इति भावः। अपि चे-
(4b1) त्यादिनोपचयमाह। यदयम्भावः। अजातोऽनष्टश्च रूपातिशयो-
स्येति विग्रहः[8] (।) नित्यमेकत्वरूपत्वाद् द्रव्यान्तरेण व्यवधाने दूरदेशस्थितौ च भवे-
युरपि प्रत्यक्षाप्रत्यक्षत्वादय इत्यत आह। अव्यववानदूरस्थान(4b1) इति।
न विद्यते व्यवधानदू[9]रस्थाने चास्येति विग्रहः। क्वचिदव्यवधानादूरस्थान 32b
इति पठ्यते। तत्र व्यवधानदूरस्थानशब्दयोः प्रत्येकं नञा समासं कृत्वा पश्चा(द्)
विशेषणसमासः कार्यः। कञ्चित्पुरुषमपेक्ष्य कोपि प्रत्यक्षोऽन्यञ्चापेक्ष्य प्रत्यक्ष
इति न विरोध इत्याह। तस्यैव(4b2)। तस्याप्युन्मीलितलोचनाद्यवस्थायां
प्रत्यक्षोऽन्यदा चाप्रत्यक्ष इति न[2] काचित् क्षतिरित्याह। तदवस्थेन्द्रियादेरेव
(4b2)तदवस्थमविकृतमिन्द्रियमस्येति विग्रहः। आदिग्रहणं मनस्काराद्याक्षेपाय।
कदाचिदभिव्यक्तवेलायां[3] प्रत्यक्षो भवति कदाचिच्चानभिव्यक्तक्षीरादिवेला-
यामप्रत्यक्षश्चेति येन प्रत्यक्षाप्रत्यक्षत्वेन कदाचिदनुमानस्योपलब्धिरशक्तादनुत्प-
त्ते[4]रिति। कदाचित्तु व्यक्तावस्थायां प्रत्यक्षं। किं पुनरत्रायुक्तं। येनैवं ब्रूष
इति चेदाह। एकस्मिन्नेवानतिशये दध्यादावमीषां प्रकाराणाम्प्र[5]त्यक्षाप्रत्यक्षत्वा-
दीनां विरोधादिति(4b2)। ये परस्परविरुद्धरूपा न तेषामेकत्रानतिशये सम्भवः।
तद्यथा शीतोष्णस्पर्शादीनां। परस्परविरु[6]द्धाश्च प्रत्यक्षाप्रत्यक्षत्वादयः। इति
व्यापकविरुद्धोपलब्धिम्मन्यते॥

परः प्राह॥ नानतिशय (4b3) इति। एकस्याव्यक्तावस्थालक्षणस्या-
तिशयस्य निवृत्याऽपर[7]स्य व्यक्तावस्थालक्षणस्योत्पत्या च क्षीरं दधीति
व्यवहारस्योपगमात्। अनेनाजातानष्टरूपातिशय इत्यादेरसिद्धत्वमाह। न
तावदयमतिशयो भवद्भिरति[8]शयवद् भावव्यतिरिक्तोऽभ्युपगतोऽभ्युपगमे
वा तदवस्थोऽनन्तराभिहितो दोषः स्यात्[9](।)तस्मादव्यतिरिक्त एवायं 33a
तत्र चायन्दोष इत्याशूर्याह। सोतिशयो व्यवस्थालक्षणस्तस्यातिशयवतोऽवस्थातु-

मानः प्रवर्त्तमानश्च कथं न स्वभावनानात्वमाकर्षयति सुख[3]दुःखवत् । सान्वयत्वे च का कस्य प्रवृत्तिर्निवृत्तिर्वेति यत्किञ्चिदेतत् ।

अथवा यदि कस्यचित्स्वभावस्य प्रवृत्तिनिवृत्ती स्वयमप्यनुक्रियेते तदेव परो ब्रुवाणः किमिति नानुमन्यते । त[4]स्य निरन्वयोपजननविनाशोपगमादिति चेत् । कोयमन्वयो नाम (।) भावस्य जन्मविनाशयोः शक्तिः, सास्त्येव प्रागपि जन्मनो निरोधादप्यूर्ध्वं (।) तेनायं नापूर्वः सर्वथा

---

रात्मभूतोऽनन्वय इत्येकान्तेन निवर्त्तमानः । व्या[1]पकस्वभावात्प्रवर्त्तमानोऽसन्नेव कथन्न स्वभावनानात्वं । सुखदुःखयोरिवाकर्षति । अन्वाकर्षत्येवेत्यर्थः । प्रयोगो [?प्रयोगः] पुनर्यो यस्यात्मभूतः(4b3) स तन्निवृ[2]त्तावेकान्तेन निवर्त्तते प्रवृत्तौ चासन्नेव प्रवर्त्तते यथा तस्यैवातिशयस्यात्मा । आत्मभूतश्चातिशयस्यातिशयवानिति स्वभावहेतुः । ततश्च तयोरवस्थ[3]योरवस्थातुर्न्नानात्वं परस्परविरोधिधर्माध्यासितत्वात् सुखदुःखवदिति स्वभावहेतुरेव । नैवासावतिशयोऽनन्वयः प्रवर्त्तते निव[4]र्त्तते वाऽतः पूर्वस्मिन्प्रमाणे साध्यविकलत्वन्दृष्टान्तस्य । उत्तरत्र त्वसिद्धिर्हेतोरिति चेदाह । सान्वयत्वेचातिशयस्य निवृत्तिप्रवृत्योरं[5]गीक्रियमाणे का कस्य निवृत्तिः प्रवृत्तिर्वेति(4b3) । नैव काचित्कस्यचिन्निवृत्तिः प्रवृतिर्वा । सर्व्वस्य सर्व्वदा सत्त्वात् । तथा च सर्व्वं सर्व्वत्र समुपयु[6]जे[?ज्ये]तेत्यादिना पुरोनुक्रान्तो दोषोनुपयुज्यत इत्यभिप्रायः । उपचयमाह । यदि च कस्यचित् स्वभावस्यातिशयाख्यस्य प्रवृत्तिनिवृत्तिर्वेति स्वयमभ्यनुज्ञायते[7] त्वया । एकातिशयनिवृत्याऽपरातिशयोत्पत्या व्यवहारभेदोपगमादित्यविधानात् । तदेतदेव परस्तथागतवचोऽभ्यासोपजातावदातमति[8]र्ब्रुवाणः । नानुमन्यते भद्रमुखेण [?मुखेन] भवेदेवं यदि यथा मया प्रवृत्तिनिवृत्ती अभ्यनुज्ञायेते तथा तेनापि।
33b यावतास्य निरन्वयोपजननविनाशोपगमो मम[9]त्वाविर्भावतिरोभावमात्रन्तत्कथमिवानुमन्यत इति कदाचिद् ब्रूयात्पर इति तन्मतमाशङ्कते । तस्ये(4b4)त्यादिना ।[1] सदैव, भवद्भिः शून्यहृदयैरयमन्वयो घोष्यते । तत्र वक्तव्यङ्कोयमन्वयो नाम भावस्य जन्मविनाशयोरिति सत्यं एषा । परः प्राह (।) किमत्राभिधानीयं यावता शक्तिरन्वयो भावस्य जन्मविनाशयोरिति व[2]र्त्तते । कथम्पुनः सान्वय इत्याह । यतोस्त्येव प्रागपि जन्मनो निरोधादप्यूर्ध्वं (4b5)सा शक्तिरवस्थातृलक्षणा येनैतदेवन्तेनायम्भावो नापूर्वः सन् सर्वथा जायते[3] अपि तु शक्तिरूपेण पूर्व्वं व्यवस्थित एव केवलमाविर्भवतीति सर्व्वथाग्रहणेन ज्ञापयति । तथा न पूर्व्वो विनश्यत्येकान्तेनापि तु तिरोभवति ।[4] असतो नास्त्युदयः सतश्च नास्ति विनाश इति यावत् ।

जायते, न[5] पूर्वो विनश्यतीति । यदि सा सर्वदाऽनतिशया किमिदानीमतिशयवद्यत्कुतोयं व्यवहारविभागः । ता अवस्था अतिशयवत्य इति चेत् । ता अवस्था : सा च शक्तिः किमेको भाव आ[6]होस्विन्नाना । एकश्चेत्कथमिदानीमिदमेकत्राविभक्तात्मनि निष्पर्यायं परस्परव्याहतं योद्यते । जन्माजन्म निवृत्तिरनिवृत्तिरेकत्त्वं नानात्त्वं प्रत्यक्षता-ऽप्रत्यक्षतार्थक्रियोप[7]योगोनुपयोगश्चेत्यादि । अस्ति पर्यायोऽवस्था शक्तिरिति तेनाविरोध इति चेत् । विस्मरणशीलो देवानांप्रियः प्रकरणं न लक्षयति । शक्तिरवस्थेत्येको भावोऽविभाग इति य[8]त्कोऽयं विरोध उक्तः ।

---

आचार्य आह । यदि सा शक्तिः सर्व्वदा (4b6) तिरोभावाविर्भावकालेऽनतिशयाति-
शय[5]रहिता एकरूपेति यावत् । तदा किमिदानीं अतिशयवद्विद्यते । यत(:)
कुतोयं व्यवहारविभागः क्षीरन्दधितक्रमित्यादि । साङ्ख्य आह ।[6] अवस्था अति-
शयवत्य (4b6) इति । ता (4b6) इत्याद्याचार्यः । विकल्पद्वयञ्च प्रकारान्तरा-
सम्भवात्कृतं । न वाह्रीकवादो युज्यते तत्स्वान्यत्वयोः परस्परपरिहारस्थि[7]ति-
लक्षणतया तृतीयराशिव्यतिरेचकत्वात् । एकत्वे को दोष इति चेदाह (।) एकश्चे-
त्तदा कथमिदमेकत्राविभक्तात्मन्यविभक्तस्वरूपे योक्ष्यते (4b7) । व्यपेक्षया
भ[8]वेदपीत्याह । निष्पर्यायं किम्पुनस्तत्परस्परव्याहत इत्याह जन्म अवस्थानाम-
जन्मशक्तेः । तथार्थक्रियायामुपयोगोऽवस्थानां शक्तस्त्वनुपयोग (4b7) इ[9]ति । 34a
प्रयोगाः पुनः (।) शक्तेरपि जन्मास्ति । अवस्थाभ्योऽव्यतिरेकात् । अवस्था-
स्वरूपवत् । अवस्थानाम्वा न जन्म शक्तेरव्यतिरेकात् । शक्तिस्वरूपवत् ।
स्वभावहेतुविरुद्धव्याप्तो[1]पलब्धि(:) । एतेनैव प्रकारेणार्थक्रियोपयोगानुपयोगनिवृत्य-
निवृत्यादिषु स्वभावहेतुविरुद्धव्याप्तोपलब्धयो योज्याः । आदिग्रहणेन पतनापतन-
योरपि परिग्रहः ।

पु[2]नरपि साङ्खीयम्मतमाशङ्कते । अस्तीत्या (4b8) दिना । केनचित्पर्यायेण अवस्थाशक्त्योरनन्यत्वम्परमार्थतस्तु भेद एव तेन जन्मादीनामविरोध इति । नूनम्भवतः स्वपक्षरक्षणा[3]कुलबुद्धेरात्मापि विस्मृतः । इत्याकूतवानाह । विस्मरणशील (4b8) इत्यादि । यतोऽनन्यत्वपक्षेऽयन्दोषोस्माभिरुक्तोऽन्यत्वपक्षेत्वन्य एव भविष्यति । कः पुनरसावन्य[4] इति तमेवदर्शयितुमुपक्रमते । अथाप्यनयोः शक्त्यवस्थयोर्विभागोऽन्यत्वन्तदा न कश्चिद्विरोधः । केवलं सान्वयो भावस्य जन्म विनासा [?विनाशा]दिति न स्यात् । किं[5] कारणं । यस्मात् यस्यान्वयः शक्तित्वेनाभिमतस्य न तस्य जन्मविनाशौ नित्यमेकस्मिन्नेव स्वभावे व्यवस्थानात् । यस्य

अथास्त्यनयोर्विभागो न कश्चिद्विरोधः। केवलं सान्वयौ भावस्य
जन्मविनाशाविति न स्यात्। तस्माद्यस्यान्वयो न तस्य जन्मविनाशौ,
यस्य च तौ न तस्यान्वयः[9], तयोरभेदाददोष इति चेत्। अनुत्तरं वत
दोषसङ्कटमत्र भवान् दृष्टिरागेण प्रवेश्यमानोपि नात्मानं चेतयति ।
5a अभेदो हि नामैक्यं, ताविति च भेदाधिष्ठानो भावि[10]को व्यवहारो निवृ-
त्तिप्रादुर्भावयोः निवृत्तिप्रादुर्भावौ स्थितावास्थिति(?)रित्यादिकं नानात्व-
लक्षणञ्च कथं योत्स्यते। अथ हि भावानाम्भेद एतद्विरहश्चाभेदो, यथा
सुखादिषु शक्त्यवस्थयोश्चैकात्मनि । अन्यथा भेदाभे[1]दलक्षणाभावाद्भेदा-
भेदयोरव्यवस्था स्यात् सर्वत्र। तदात्मनि प्रादुर्भावोऽभेदो विपर्यये
भेदो, यथा मृदात्मनि प्रादुर्भवतो घटस्य तस्मादभेदो, भेदश्च विपर्यये सुख-
दुःखयोरिति[2]; इदं भेदाभेदलक्षणं तेनाविरोध इति चेत्। न वै मृदात्मनि

---

वा ता उत्पादविनाशाववस्थात्वेनाभी[6]ष्टस्य न तस्यान्वयः। अपरापरावस्थो-
दयास्तमयेनावस्थितरूपाभावात्। तयोः शक्तिव्यक्तयोरभेदाददोष इति कापिलः।
अनुत्तर(4b10)मित्याद्याचार्यः। किमत्रायुज्यमा[7]नकं येनैव[8] वदसीत्याह । अभे-
दो हि नामैक्यमुच्यते (4b10)। तौ शक्तिव्यक्तिभेदावित्ययञ्च भेदाधिष्ठानो-
न्यत्वनिबन्धनो व्यवहारो भाविक इति कल्पनाविरचितस्याप्रतिक्षे[8]पात् । किञ्च
निवृत्तिप्रादुर्भावयोः सतोरनिवृत्तिप्रादुर्भावौ तथा स्थितौ सत्यामस्थितिः। आदि-
34b ग्रहणाद् गतावगतिरित्यादि योज्यं । एतद् भेदलक्षणङ्कथं योज्यते भ[9]वता । तथा-
ह्यवस्थानिवृत्तिप्रादुर्भावाभ्यामनिवृत्तिप्रादुर्भाववत्याः शक्तेरभेदो नेष्यते त्वया ।
तथा शक्तेरवस्थानेपि नावस्थानामवस्थानं । न च शक्तेस्तासामन्यत्वमिष्टं[1] ।
तस्मादेवं रूपं नानात्वमित्याह। एष हि निवृत्तिप्रादुर्भावयोरनिवृत्तिप्रादुर्भाव(5a1)
इत्यादिभेदः। तथा हि यन्निवृत्यादिना न यस्य निवृत्यादयस्तत्तस्माद् भिन्नं यथा
ता[2]लतरुस्तमालादित्यतिप्रतीतमेतत्। एतद्विरहश्चाभेद इति यन्निवृत्या यस्य
निवृत्तिरित्यादि । ननु च भूतभौतिकचित्तचैत्तादीनाम्प्रतिनियतसहोत्पादनिरो-
ध[3]स्थितीनामेतद्विद्यते। न च तेषामभेदस्तत् कथमुक्तमेतद्विरहश्चाभेद इति चेत्।
न तेषाम्भिन्नोत्पादादिमत्वात्। यथाक्रममुदाहरणद्वयमाह। यथे[4]त्यादि। अन्य-
थे(5a1)ति । यद्यनन्तरोक्तम्भेदाभेदलक्षणन्नाश्रीयते तदा भेदयोर्लक्षणा-
भावात्कारणाद् भेदाभेदयोरव्यवस्था स्यात्। सर्व्वत्रेति सुखादीनाम्परस्परं[5] चैतन्या-
नाञ्च। सुखादिभ्यश्चैतन्यानां अभेदः । सुखादीनाम्प्रत्येकम्भेदो न भवेदिति
यावत्। तदात्मनीत्यादिना परः स्वसमयप्रतीतम्भेदाभेदयोर्लक्षण[6]माह । तेना-

घटस्य प्रादुर्भावः किन्तर्हि मृदात्मैव कश्चित् घटा [ ? टो ], न ह्येकस्त्रैलोक्ये मृदात्मा, प्रतिविज्ञप्तिप्रतिभासभेदश्च द्रव्यस्वभा[3]वभेदात्। एवं ह्यस्यापि सुखादिषु चैतन्येषु भेदावगमः समर्थो भवति। यद्येवं भेदः स्यात्। सत्यप्येतस्मिन् कस्यचिदात्मनोऽन्वयादेवमिति चेत्। सुखादिष्वप्ययं[4] प्रसङ्गः चैतन्येषु च। न च घटादिष्वपि सर्वात्मनान्वयो-

---

विरोध (5a3) इति जन्माजन्मादीनां। अनन्तरोक्तस्य वा। न वै मृदात्मनीत्यादिना मृत्पिण्डघटयोराधाराधेयभावं प्रतिक्षिपति। किन्तर्हि मृदात्मैव कश्चित्[7] विशिष्टग्रीवादिसन्निवेशावच्छिन्नो घट इत्यभीधीयते(।) नन्वेकमेव मृद्द्रव्यं सर्व्वत्र तत्कथमिदमभिहितमित्यत आह। नहि एकस्त्रैलोक्यमृदात्मे(5a3)ति। कुतः प्रतिविज्ञ[8]प्तिप्रतिभासभेदन्द्रव्यस्वभावभेदादिति सम्बन्धः। अन्योन्यभिन्नानामेव द्रव्याणाम्विज्ञाने प्रतिभासनादित्यर्थः। तथा प्रत्यवस्थाभेदभिन्नावस्थत्वात्। प्रत्यर्थ[9]क्रियाभेदं चाश्रित्य द्रव्यस्वभावभेदात्। परस्परासम्भविकार्यकारणादिति यावत्। परस्यापि सत्वरजस्तमश्चैतन्येषु भेदाभ्युपगम इदमेव कारणं युक्तमिति कथय[1](न्) नाह। एवं हीति (5a4)। यदि प्रतिविज्ञप्तिप्रतिभासभेदादिना भेद इष्यते। चैतन्येषु चेति बहुवचनं बहवः पुमांस इति सिद्धान्तात्। यद्येवमिति प्रतिविज्ञप्ति प्र[2]तिभासभेदादिना। पुनरप्याह। सत्यप्येतस्मिन् प्रतिविज्ञप्तिप्रतिभासभेदादौ कस्यचिदात्मन (5a4) इति शक्तेरनुगमादैक्यमवस्थानामिति। आचार्य आह। यद्ये[3]वं सुखादिष्वप्ययमेवाभेदप्रसङ्गश्चैतन्येषु च। सुखादिष्वपि हि गुणत्वाद् भोक्तृत्वकर्तृत्वादीनामनुगमाच्चैतन्येषु च भोक्तृत्वाकर्तृत्वागुणत्वादी[4]नान्तथा सुखादि चैतन्येषु सत्वज्ञेयत्वादीनामन्वयादित्यभिप्रायः। प्रयोगो[? गः] पुनरभिन्नाः पुरुषसुखादयः परस्परमन्वयान्वयभाक्त्वात्। श[5]क्तिव्यक्तिवत्। शक्तिव्यक्ती वा भिन्नेऽन्वयोनन्वयभाक्त्वादेव। सुखादिचैतन्यवदिति स्वभावहेतु(:)। अथापि स्याद्यत्र सर्व्वात्मनैवान्वयस्तत्राभेदो न[6] तु यत्र केनचिद्रूपेण। घटादिषु च सर्व्वात्मनान्वयस्ततोयमदोष इत्यत आह। न च घटादिष्वपि सर्व्वात्मनान्वयो (5a5) पि तु केनचिद्रूपेणेति न केवलं सुखादि[7]ष्वित्यपि शब्दः। कुतोऽवैश्वरूप्यसहोत्पादादिप्रसङ्गात्। तथाहि सर्व्वासामवस्थानां सर्व्वप्रकारेणान्वये सत्यैक्यम्प्राप्नोति। ततश्च विशिष्टरूपरसगन्धश[8]वीर्यविपाकाभावात्। 35a वैचित्र्यन्न भवेत्। एवञ्च पञ्चभूताभावप्रसङ्गोऽध्यक्षादिवाधाप्रसं[9]गश्चेति 35b भावः। सहोत्पत्तिश्च सर्व्वासामवस्थानाम्प्रसज्यते। आदिशब्देन ह्यनिरोधार्थक्रियाव्यापारविकारादय[1] उपादीयन्ते। प्रयोगाः पुनर्यद्विशिष्टरूपरसगन्ध-

ऽवैश्वरूप्यसहोत्पत्त्यादिप्रसङ्गात् । न च घटं मृदात्मानञ्च कश्चिद्विवेकेनोपलक्षयति येनैवं स्यादिति नेह[5] प्रादुर्भूतमिति । न ह्यधिष्ठानाधिष्ठानिनोर्विविधानुपलक्षणे एवं भवति । न च शक्तेः शक्त्यात्मनि प्रादुर्भाव इति तस्याः स्वात्मनोऽभेदो न स्यात् । एतेन परिणामः प्र[6]त्युक्तः ।

योपि हि कल्पयेद्यो यस्य परिणामः स तस्मादभिन्न इति । न हि शक्तिरात्मनः परिणाम इति । किञ्चेदमुक्तम्भवति परिणाम इति,

---

शब्दादिभिरनेकप्रकारं न भवति। न तस्य वैश्वरूप्यमस्ति। यथैकस्य सुखाद्या-
त्मनः। तथा सति(?) मताना[2]मप्यवस्थानामनन्तरोक्तो धर्मो नास्ति न चासिद्धो
हेतुर्यतो यद्यस्मान्न व्यतिरिच्यते न तद्विशिष्टरूपादिभिरनेकप्रकारं यथा तस्यै-
वात्मा। न व्यतिरिच्यन्ते चा[3]वस्था अभीष्टा इति व्यापकविरुद्धोपलब्धी। तथा
यद्यस्मादपृथग्भूतं तत्तदुत्पादादिभिरुत्पादादिमत्। यथा तस्यैव स्वरूपं। अपृथग्भू-
तारुचा[4]भिमता अवस्थास्ताभ्योऽन्यस्या इति स्वभावहेतुः। अन्यथा घटोयमित्यन-
न्यत्वमेवायुक्तं। नामान्तरन्वा अर्थभेदमभ्युपगम्य तथाभिधाना[5]त्। उपचयमाह।
न च घटं मृदात्मानञ्च कश्चिद(5a5)त्यर्थमुन्मीलितलोचनोप्ययं घटोयं च
मृदात्मेति विवेकेनोपलक्षयति। येनैवं स्यादिदमि[6]ह प्रादुर्भूतमिति तदनेनाभेदलक्षण-
मत्यन्तासम्बद्धमेवेत्याह। ननु च पिण्डरूपात्मृदात्मनो घटस्य विवेकेनोपलक्षणमस्त्येव
तत्किमेवमुक्तमिति चे[7]त्। सत्यमस्ति। न तु घटाद् भिन्नन्तं परोभिमन्यत इत्यभि-
प्रायाददोषः। यदि नाम भेदेनानुपलक्षणन्तयोस्तथापि कस्मादेवं न स्यादिति चेदाह ।।
नह्यधि[8]ष्ठानाधिष्ठानिनोराधाराधेययोः कुण्डेबदरयोर्विवेकेनानुपलक्षणे सत्ये-
वम्भवतीदमिह प्रादुर्भूतमिति(4a6)। तदनेन घटमृदात्मनोराधाराधेयभावो[9]
36a नास्ति विवेकेनानुपलक्षणात्सत्वादितत्स्वभावयोरेवेति व्यापकानुपलब्धिं मन्यते।
अधुना यद्यस्मिन्प्रादुर्भवति तत्ततोऽभिन्नमित्यस्याभेदलक्षणस्याव्या[1]पितासा[? शा]
चिख्यासुराह। न च शक्त्यात्मनि प्रादुर्भावस्तस्या नित्यमवस्थानाभ्युपगमात् ।।
अन्यथावस्थैव सा स्यात्। तथा च तस्याः स्वात्मनः सकासा [? सकाशा]दभ्यु[2]पेतो-
ऽभेदो न स्यात्। अभेदलक्षणाभावात् उपलक्षणञ्चैतद्वचक्तौ सुखादिषु पुरुषेषु च
तुल्यदोषत्वात्। अन्ये तु स्वदर्शनापराधमलीमसधिय(:)[3] केचित्सांख्या एवमाहुः।
यो यस्य परिणामस्स तस्मादभिन्नः। तद्यथा हेम्नः कुण्डलाद्यवस्थाविशेष इति
तेप्यनेनैव पूर्व्वस्याभेदलक्षण[4]स्याव्यापिताप्रदर्शनेनापहस्तिता इति चेतस्या-
रोप्याह। एतेनैवे(5a6)त्यादि। युष्मद्दर्शनपरिणामोपि न युक्त इत्यभिप्रायवा-
नपक्षेप[5]ङ्करोति। किञ्चेद(5a7)मित्यादिना। परेणापि किमत्र वक्तव्यं यावता

अवस्थितस्य द्रव्यस्य धर्मान्त[7]रनिवृत्तिर्धर्म्मा(न्तर)प्रादुर्भावश्च परिणामः। यत्तद्धर्म्मान्तरं निवर्त्तते प्रादुर्भवति च। किन्तत्तदेवावस्थितं द्रव्यं स्यात्ततोऽर्थान्तरं वाऽन्यविकल्पाभावात्। यदि तत्तदेव, तस्यावस्थानो [? यां][8] न निवृत्तिप्रादुर्भावाविति कस्य ताविति वक्तव्यं। अवस्थितस्य धर्म्मान्तरमिति च न सिध्यति। न हि तदेव तस्यानपाश्रितव्यपेक्षाभेदं धर्म्मान्तरम्भवति। अथ द्रव्यादर्थान्तरं धर्म्मस्तदा तस्य[9] निवृत्ति-

---

भगवता कपिलेन स्पष्टमिदमुक्तमित्यभिसन्धायाह। अवस्थितस्य[6] द्रव्यस्य यथा काञ्चनस्य धर्मान्तरस्य केयूरस्य निवृत्तिः। धर्मान्तरस्य च कुण्डलादेः प्रादुर्भावः परिणाम इति। आचार्यस्तस्यैव तावदिदमीदृशं[7] प्रज्ञास्खलितङ्कथं वृत्तमिति सविस्मयानुकंपन्नश्चेतः। तदपरेप्यनुवदन्तीति निर्दयाक्रान्तभुवनं दिग्व्यापकन्तमः। कः प्राणिनो हितेच्छा विपुलत्व[8]स्यापराध इति मन्यमान(:) प्राह।

ननु यदि नाम तेनैवमुक्तं। भवद्भिस्तु निभालनीयमेतत् यत्तद्धर्मान्तरं कुण्डादिकं निवर्त्तते प्रादुर्भवति च किं त[9]देवावस्थितं काञ्चनद्रव्यं स्यात्ततोर्था- 36b
न्तरम्वेति। कस्माद्विकल्पद्वयमेव कृतमितिचेदाह (।) अन्यविकल्पाभावात् (5a8)। निर्ग्रन्थवादस्यायोगादित्यभिसन्धिः। यद्याद्यो[1] विकल्पस्तदा कोदोष इति चेदाह। यदि तद्धर्मान्तरन्तदेवावस्थितं द्रव्यं (5a8)। तदा तस्याव स्थानान्न निवृत्तिप्रादुर्भावावाविर्भावतिरोभावलक्षणाविति त[2]स्मात्कस्य ताविति वक्तव्यम्भवद्भिः। प्रयोगो [? प्रयोगः] पुनः यस्यावस्थानं न तस्य निवृत्तिप्रादुर्भावौ। यथावस्थातुर्द्रव्यस्य। तथा चावस्थानन्तस्य धर्मा[3]न्तरस्येति व्यापकविरुद्धोपलब्धिः। न चासिद्धो हेतुर्यतो यदवस्थातुरनन्यत्तस्यावस्थानं यथा तत्स्वरूपस्यैव। अनन्यच्चैतद्धर्मान्तरं तस्मा[4]दिति स्वभावहेतुः किञ्च यद्यवस्थितमेव द्रव्यं तद्धर्मान्तरं तदावस्थितस्य द्रव्यस्य धर्मान्तरमिति। वचनं सिध्यति॥ किङ्कारणमित्याह। न[5] हि तदेव तस्य धर्मान्तरम्भवती(5a9) ति भवत्येव तदेव तस्य धर्मान्तरं यथा कृतकत्वं शब्दस्याव्यतिरिक्तमपि तस्माविति चेदाह। अनपाश्रितव्य[6]पेक्षाभेदं (5a9)। एतदुक्तम्भवति। अत्र हि स एव सब्दो [? शब्दो]ऽकृतकादिभ्योव्यावृत्तत्वात् तद्व्यावृत्त्यपेक्षया तन्मात्रजिज्ञासायां प्रतिक्षिप्तभेदान्तरेण शब्देन धर्मत्वे[7]न व्यपदिस्यते [? व्यपदिश्यते] इह तु पुनर्व्यपेक्षाभेदोपि नास्ति तत्कथन्तदेव तस्य धर्मान्तरम्भविष्यतीति।

धर्मस्य द्रव्यादर्थान्तरपक्षे तर्हि को दोष इत्याह॥ अथेत्या (5a9)[8]दि॥ कस्माद्धर्मनिवृत्तिप्रादुर्भावाभ्यां न द्रव्यस्य परिणामो यस्मा(त्) न ह्यर्थान्तरगताभ्यां निवृ-

प्रादुर्भावाभ्यां न द्रव्यस्य परिणतिः (।) न ह्यर्थान्तरगतस्य स्यान्निवृत्तिप्रादु-
र्भावाभ्यामर्थान्तरस्य परिणतिः। चैतन्येपि प्रसङ्गात। द्रव्यस्य धर्म इति
5b च व्यपदेशो न सिध्यति[10] सम्बन्धाभावात्। नहि कार्यकारणभावा-
दन्यो वस्तुसम्बन्धोस्ति। न चानयोः कार्यकारणभावः, स्वयमतदात्मनो-
ऽतत्कारणत्वात्। धर्म्मस्य द्रव्यादर्थान्तरभूतत्वात्। अर्थान्तरत्वेपि
धर्म्मकारण[1]त्वे धर्म्मान्तरस्य कार्यस्योत्पादनात् द्रव्यस्य परिणाम इतीष्टं

---

37a त्तिप्रादुर्भावाभ्यामर्थान्तरस्य परिणतिर्भवति। तदेव कुतश्चैत[9]न्येपि परिणतेः प्रसङ्-
गात्। न च चैतन्यस्य परिणतिरिष्यते। प्रधानपुरुषयोरैक्यापत्तेरकर्तृता चेति वच-
नात्। प्रयोगः पुनः। यद्यतोर्थान्तरन्न तद्गताभ्यां निवृ[1]त्तिप्रादुर्भावाभ्यां तस्य परि-
णतिः। तद्यथा चैतन्यभिन्नस्वभावस्याङ्कुरस्य निवृत्तिप्रादुर्भावाभ्यां चैतन्यस्य धर्मान्त-
रञ्च द्रव्यादिति व्यापकविरुद्धोपलब्धिः। भवे[2]देतन्न यस्य कस्यचिदर्थान्तरस्या-
सम्बद्धस्यापि निवृत्तिप्रादुर्भावाभ्यामन्यस्य परिणतिरपि कुत(:) चासम्बद्धस्यैव।
यथा तस्यैवाङ्कुरस्य बीजसम्बद्धस्य निवृत्तिप्रादुर्भावाभ्याम्बी[3]जस्य तेन सामान्येन
साधने सिद्धसाधनं। धर्मस्य द्रव्यसम्बन्धात् (त)द्विशेषेण तु साधनविकलता
निदर्शनस्य। अङ्कुरस्य चैतन्येन सह सम्बन्धाभावादिति[4] चेदाह। द्रव्यस्य धर्म
इति (5a10) व्यपदेशो न सिध्यति (5a10)। कुतः सम्बन्धाभावात्। एवं
मन्यते द्रव्यसम्बन्धोयं धर्म इत्येतदेव न विद्यते। तत् कुतो व्यावृत्ति[5] प्रसङ्गस्येति।
अस्त्येव तर्हि द्रव्यधर्मयोराधाराधेयभावलक्षणस्सम्बन्धस्ततश्च सविशेषणेपि हेतो
असिद्धिरित्यत आह। नहि कार्यकारणभा[6]वादन्यो वस्तुभूतः सम्बन्धोस्ती(5b1)
ति। आधाराधेयभावोऽपि कार्यकारणभावविशेषादेव व्यवस्थाप्यते। यथा निर्णीतमा-
धारतोभिनिवृत्तेरात्मनस्ताद्[7]शो नु (?) ..यः कार्यन्तस्येत्यत्र प्रकरणे प्रमाणविनिश्चय
इत्यभिप्रायः। अस्तु तर्हि कार्यकारणभावस्तयोरिति चेदाह। न चानयोर्द्रव्यधर्मयोः
कार्यकारणभाव[8](5b1) इति। कुतः स्वयमतदात्मनोऽतत्कारणत्वात्। यद्धि यत्स्व-
भावं न भवति न तत्तत्कारणतया भवद्भिरभ्युपेयं यथा रजस्तमसः। तथा चेदमपि
37b द्रव्यधर्मस्स्वभावो[9]भवति तत्कथमिव तस्य कारणत्वमुपेयादिति व्यापकानुपलब्धि-
प्रसङ्गं मन्यते। न चायमसिद्धो हेतुरिति मन्तव्यं। अर्थाभावपक्षं समाश्रित्य दोषा-
भिधानस्य प्रकृत[1]त्वात्। यदाह। धर्मस्य द्रव्यादर्थान्तरत्वं (5b1)स्यादिति। अथा-
प्यस्मद्वै(फ)ल्ये स्यात् पूर्व्वकान् कापिलानतिपत्य साङ्ख्यानां शकमाधववत्।
द्रव्यस्य व्यतिरेकेपि धर्मकार[2]णत्वमिष्यते तदापि ब्रूम इत्याह। अर्थान्तरत्वेपि द्रव्यस्य
धर्मकारणत्वेऽङ्गीक्रियमाणेऽर्थान्तरस्य कार्यस्योत्पादनात्(5b2)कारणात्। द्रव्यस्य

स्यात् । तद्[? त्व]विरुद्धमन्यस्यापि हेतुफलसन्ताने मृद्द्रव्याख्ये पूर्वकान्मृत्पिण्डद्रव्यात्कारणादुत्तरस्य घटद्रव्यस्य कार्यस्योत्पत्तौ[2] मृद्द्रव्यं परिणतमिति व्यवहारस्योपगमात् । न च धर्म्मस्य द्रव्यात्तत्वान्यत्त्वाभ्यामन्यो विकल्पः सम्भवत्युभयथा येन परिणामः । न निर्विवेकद्रव्यमेव धर्म्मो न(ा)पि द्रव्यादर्थान्तरं, किन्तर्हि[3] द्रव्यस्य सन्निवेशोऽवस्थान्तरं, यथाङ्गुलीनां मुष्टिः । न ह्यङ्गुल्य एव निर्विवेका मुष्टिः, प्रसारितानाममुष्टित्त्वात् । नाप्यर्थान्तरं, पृथक्स्वभावान्नोपलब्धेरिति चेत् । न ( । ) मु[4]ष्टेरङ्गुलिविशेषत्त्वात् । अङ्गुल्य एव हि क(ा)श्चिन्मुष्टिर्न सर्वाः । न हि प्रसारिता (अ) ङ्गुल्यो निर्विवेकस्वभावा मुष्ट्य ंगुल्योऽ(ल्यः,अ)वस्थाद्वयेपि उभयप्रतिपत्तिप्रसङ्गात्।

---

परिणाम इतीष्टं स्या (5b2) द् भवता ततः किं स्यात् इत्याह (।) तद्विरुद्धस्यापि तथागतानुसारिणः (।) किङ्कारणन्तेनापि हेतुफलसंतानं मृद्द्रव्याख्ये पूर्व्वकात् मृत्पिण्डात्कारणभूता[4]दुत्तरस्य घटद्रव्यस्य कार्यस्योत्पत्तौ सत्यां मृद्द्रव्यं परिणतमिति व्यवहारभेदस्योपगमात् (5b3) कारणात् । स्यात् मतं । यदि नाम प्रकारद्वयेनापि परिणामो[5] न युज्यते प्रकारान्तरेण तु भविष्यतीत्येतदाह । न चे (5b3) त्यादि । तस्मादुभ (य) थापि न परिणाम इत्युपसंहारः । न निर्विवेकं निर्विशेषं द्रव्यमेव (5b3) परो ना[6]पि द्रव्यादर्थान्तरमेकान्तेनैव किन्तर्हि द्रव्यसन्निवेशोऽवस्थान्तरन्नान्यः यथाङ्गुलीनां सन्निवेशोऽवस्थान्तरम्मुष्टिः । यथाङ्गुलीनां सन्निवेशोऽवस्थान्तरन्तत्वान्यत्वाभ्यामनिर्वचनीयम्मुष्टिः कस्माद्धेतोर्न ह्यङ्गुल्य[7] एव निर्विवेका मुष्टिः । कुतः प्रसारितानाममुष्टित्वात् (5b4) । अन्यथा प्रसारितानामपि विशेषाभावात् मुष्टचवस्थायामिव मुष्टित्त्वप्रसङ्ग इति । अभावहेतुकाले रूप[8]कः । नाप्यर्थान्तरं मुष्टिरङ्गुलिव्यतिरेकेणाप्रतिहतकारणेन प्रयत्नवतापि मुष्टेरनुपलब्धेरिति । कदाचित्कापिला एवं ब्रूयुरिति तन्मतं शङ्कते (।) न निर्विवेक[9]मित्यादिना । गतार्थमेतद् । नहि मुष्टेरङ्गुलिविशेषत्वादि (5b5) ति परिहरति । असक्ताङ्गुल्य एव च निर्विवेका मुष्टिरिति कथयन् दृष्टान्तायोगमाह । अतोपि यदुत ।[1] प्रसारितानाममुष्टित्वादिति तदप्ययुक्तमेव । किङ्कारणं (।) यतोङ्गुल्य एव हि विशिष्टहेतुप्रत्ययबलेन तथोत्पन्ना काश्चन मुष्टिर्न तु सर्वाः । तदेव कुत इत्याह[2] । न प्रसारिता अङ्गुल्यो निर्विवेकस्वभावा मुष्टचङ्गुल्यश्चेति (।) च शब्दोत्र लुप्तनिर्दिष्टो ज्ञेयः । अथवा मुष्टचात्मिका अङ्गुल्यः प्रसारिताः सत्यो नहि निर्विशिष्टरूपा इ[3]ति व्याख्येयं । कस्मात् । अवस्थाद्वयेपि प्रसारिताप्रसारितरूपे । उभयोरप्रसारितप्रसारितावस्थयोर्यथाक्रमं प्रतिपत्तिप्रसङ्गात् (5b5) । प्रयोगः (पुनः ।) प्रसारितावस्थायामप्रसारितावस्थायाः प्रतिपत्तिर्भवेत् अङ्गुलीनां विवेकाभा- 38a

यत्र च हि[3] खलु विवेकः स्वभावभूतः स एव वस्तुभेदलक्षणं सुखदुःखवत् । परभूते च विवेकोत्पादेऽङ्गुल्यः प्रसारिता एवोपलभ्येरन् । न हि स्वयं स्वभावादच्युतस्यान्त[6]रोत्पादेऽन्यथोपलब्धिरिति प्रसङ्गात् ।

ननूक्तं द्रव्यमेव निर्विवेकम(म्,अ)वस्था नापि द्रव्यादर्थान्तरमिति । उक्तमिदं न पुनर्युक्तं, न हि सतो वस्तुनस्तत्त्वान्यत्वे मुक्त्वान्यः[7] प्रकारः सम्भवति । तयोर्वस्तुनि परस्परपरिहारस्थितलक्षणत्वेनैकत्यागस्यापरोपादा(न)नान्तरीयकत्वात् । अङ्गुलीषु पुनः प्रतिक्षणविनाशिनीष्वन्या एव

---

वात् । अप्रसारितावस्थायामिव स्वभावहे[5]तुः । एवमप्रसारितावस्थायां प्रसारितावस्थायां तत्प्रति[6]पत्तिः स्यादित्यपरो योज्यः । यत्तूभयस्येति व्यापकानुपलब्धिः योज्या । अथाऽ[6]पि कथञ्चित्कश्चिद्विवेको स्थितयोर(व)स्थयोस्तदा स विवेकस्त्वासामङगुलीनां स्वभावभूतो वा भवेन्नवेति विकल्पद्वयं(।) प्रथमे तावद् दोषमाह । य एव खलु विवेकः स्व[7]भावभूतः। स एव स्वभेदलक्षणं सुखदुःखवदिति (5b6) । द्वितीयेप्याह । परभूते च विवेकोत्पादेऽङगुल्यः प्रसारिता एवोपलभ्येरन्(5b6) मुष्टयवस्थायामपीति शेषः[8] (।) किमिति । यतो नहि स्वभावादप्रच्युतस्यार्थान्तरोत्पादे सत्यन्यथोपलब्धिर्भवत्यतिप्रसङगात् । उष्ट्रस्याप्यर्थान्तरस्य कलभस्योत्पादे-
38b ऽन्यथोपलब्धिः स्या[9]दित्यतिप्रसङगो वक्तव्यः । प्रयोगः पुनः । यत्रस्वस्यात्मभावादप्रच्युतं न तस्यार्थान्तरोत्पादेपि अन्यथोपलब्धिः । यथोष्ट्रस्य कलभप्रादुर्भावे । अप्रच्युताश्च स्व[1]स्मात्स्वभावादङगुल्यो विवेकोत्पादेपीति विधिप्रतिषेधाभ्यां हेत्ववकल्पनायां कारणविरुद्धकारणानुपलब्धी । नन्वित्यादि परः । तत्वान्यत्वाभ्यामनिर्वचनीयं तदुक्तमिति वाक्यार्थः । उक्तमेतन्न पुनर्युक्तमित्याचार्यः । कथमयुक्तमित्याह । नहि सतो वस्तुनस्तत्त्वान्यत्वे मुक्त्वान्य(:) प्रकारः सम्भवती(5b7)ति सद्वस्तुग्रहणं कल्प[3]नाशिल्पोपरिचतस्यान्यापोहादेः सम्भवतीति प्रतिपादनाय । कुत इत्याह । तयोरि(5b8)त्यादि । प्रयोगः पुनः । यौ परस्परपरिहारस्थितलक्षणौ[4] तयोरेकत्यागोऽपरोपादाननान्तरीयकः । एकोपादानञ्चापरत्यागनान्तरीयकं तद्यथा भावाभावौ । यथोक्तधर्मवन्तौ च तत्वान्यत्वप्रकाराव[5]ति स्वभावहेतुः । नन्वङगुलीभ्यो मुष्टेस्तत्वान्यत्वप्रकारौ मुक्त्वाप्यन्यः प्रकारः संभवत्येव । न ह्यङगुल्य एव मुष्टिः प्रसारितानाममुष्टित्वात् । नाप्य[6]र्थान्तरं पृथक्स्वभावानुपलब्धेरिति चेदाह । अङगुलीषु पुनरि(5b8)त्यादि । प्रतिक्षणं विनाशो विद्यते यासां इति विग्रहः । ता एव क्षणिकत्वात् तथाविधा जाय[7]न्ते येन मुष्टयादिवाच्या भवन्तीत्यर्थः ॥ तदेतच्च वस्तुतो न

प्रसारिताः, अन्या[8] मुष्टिः। तत्र मुष्ट्यादिशब्दा विशेषविषया,ऽङ्गुलीशब्दः सामान्यविषयो, बीजादङ्कुरादिशब्दवत् व्रीह्यादिशब्दवच्च। तेनाङ्गुल्यः प्रसारिता न मुष्टिः (।) तद्यदि प्रागसदेव कारणे कार्य[9] भवेत् किन्न सर्वः सर्वस्माद्भवति, नह्यसत्त्वे कश्चिद्विशेष इति।

ननु सर्वत्र सत्त्वेप्ययं तुल्यो दोषो, नहि सत्त्वे कश्चिद्विशेषः, विशेषे वा सद्विशेषस्तैस्तुल्याभि[10]न्नः स्यात्तदभावे विशेषस्यानन्वयात्। सतश्च 6a

---

मुष्टेरङ्गुलिविशेषादित्यत्रोक्तमपि प्रसङ्गात् युक्तमुक्तमित्यवसेयं। अन्यथा किमनेन यद्ये[8]वं कथन्तर्हि मुष्टिरङ्गुलीति च व्यपदेशभेद इत्यत आह। तत्र मुष्ट्यादिशब्दा विशिष्टविषया (5b9) विशिष्टावस्थानामेवाङ्गुलीनां वाचकत्वात्। अङ्गुलीशब्दस्तु सामा[9]न्यशब्दः सर्व्वावस्थानां तासामभिधायकत्वात्। यथाक्रम- 39a मुदाहरणद्वयमाह। वीजाङ्कुरादिशब्दवद् व्रीह्यादिशब्दवच्चे (5b9)ति। एवं शकलीकृतसकलपरपक्षः कु[1]चोद्यशेषं परोपन्यस्तं परिजिहीर्षुः। परमुखेन चोद्यमुपस्थापयति (।) तद्यदीत्या (5b9) दिना। इदमस्याकूतं यथा हि तिलेष्वविद्यमानं घृतं। तथा तैलमपि[2]। तद्यदि प्रागसदेव कारणे कार्यमुत्पद्यते तथा घृतस्यापि तिलेभ्य उत्पत्तिः स्यात्। असत्वात् तैलवत्। न वा तैलस्यापि तत एव घृतवत्। नहि असत्वे कश्चिद् वि[3]शेष इति स्वभावहेतुव्यापकानुपलब्धित्वेनाभिमतयोर्व्याप्यव्यापकभावप्रसाधनप्रकार एषः।

तदेतत् सर्व (म) भ्यवधाय कृत्योत्थापनम्भवत इ[4]ति मन्यमानः प्राह। ननु सर्व्वत्र सर्व्वस्यासत्वेप्ययन्तुल्यो दोषः (5b10)। नहि सत्वे कश्चिद्विशेष इति प्रयोगो [? प्रयोगः] पुनस्तावेव सत्वादिति हेतुविपर्ययं[5] कृत्वा कार्यौ। अथापि कश्चिद्विशेषोस्ति तेन सत्वेपि न सर्व्वं सर्वस्मात् जायते तेन संदिग्धविपक्षव्यावृत्तिकत्वं प्रमाणयोरिति चेदाह। विशेषे चाऽ[6]भ्युपगम्यमाने सविशेषस्त्रैगुण्यात् सत्वरजस्तमोरूपाद् भिन्नः स्यात्। कस्मात्तस्य त्रैगुण्यस्य भावेपि विशेषस्याननुवृत्तेः कारणात्। प्रयोगः पुनः। यद्भावेपि[7] यन्नानुवर्त्तते तत्तस्मादत्यन्तं भिन्नं। यथा शब्दस्पर्शरूपरसगन्धेभ्यश्चैतन्यन्नानुवर्त्तते च विशेषस्त्रैगुण्यभावेपीति स्वभावहेतुः। एतच्चाभ्युपगम्योद्ग्राहितं[8]। अधुना सत्कार्यवादे जन्मार्थ एव न युक्त इत्याह। सतश्चे (5b10) त्यादि। नैव तस्य चासत्वेनाभिमतस्य जन्मास्ति। सत्वात्। निष्पन्नावस्थायामिवेति विरुद्धव्याप्तोपलब्धिरस्य [9]मनसि वर्त्तते। अन्यथा 39b पुनर्जातस्यापि पुनर्जातिः प्रसज्यत इत्यनवस्था स्यात्। यदाह।

सतो यदि भवेज्जन्म जातस्यापि भवेद् भव (१३) इति।

सर्वात्मना निस्वभाव(व)स्थायामिव किञ्जायते, साधनवैफल्यञ्च साध्यस्य कस्यचिदभावात् । यस्य कस्यचिदतिशयस्य तत्र कथञ्चिदसत उत्पत्तौ[1] सोतिशयस्तत्रासन् कथं जायते, जातो वा सर्वः सर्वस्माज्जायेतेति तुल्यः पर्यनुयोगः । नातिशयस्तत्र सर्वथा नास्ति कथञ्चित्सत एव भावादिति-चेत् । यथा नास्ति स प्रकारस्तत्रासन् क[2]थं जायेत । न च सर्वथा सतः कश्चिज्जन्मार्थं इत्युक्तं । असतोपि कार्यस्य कारणादुत्पादे यो यज्जननस्व-

---

किञ्च साधनानां कारणानाम्बीजतेजोजलादी[1]नां वैफल्यं प्रसज्येत साध्यस्य कर्त्तव्यस्य कस्यचिद्रूपस्याभावादिति प्रयोगः । यत्र साध्यन्न किञ्चिदप्यस्ति तत्र साधनसाफल्यं विद्यते यथा नभस्यनाधेयातिशये । न च साध्यङ्कि[2]ञ्चिदप्यस्ति कारणे व्यवस्थिते सति कार्यं इति व्यापकानुपलब्धिः । न चायमसिद्धो हेतुरिति मन्तव्यं । यस्माद् यस्य कस्यचिदतिशयस्य तत्र कारणे स्थिते कार्यं कथञ्चिदुत्पत्ता[3]विष्यमाणायां सोतिशयस्तत्रासन् कथञ्जायेत नैव जायेतासत्वात् । व्योमोत्पलमिव दुग्ध इति व्यापकानुपलब्धिरस्य चेतसि स्थिता । अथासन्नप्यतिशयो जा[4]यते । तदा जातौ वा तस्यासतोपि सर्व्वोतिशयः सर्व्वस्माज्जायेतेति तुल्यः पर्यनुयोग इति । भवतोपि घृतातिशयोपि तिलेभ्य उत्पद्येतासत्वात् । तेनाति[5]-शयवदित्यर्थः । स्वभावहेतुप्रसङ्गः । परमतमाशङ्कते । नातिशयस्तत्रे (6 a 2) त्यादिना । यथा नास्ति स कथन्तत्रासन् प्रकारो जायेतेति प्रक्षिपति । जातो[6] वा सर्व्वः सर्व्वस्माज्जायेतेति तुल्यः पर्यनुयोग इति पूर्वोक्तो दोषो न युज्यत इत्यभिप्रायः । सर्वप्रकारेणैव तर्हि निष्पन्नरूपातिशयोस्तीति चेदाह ।[7] न चेत्यादि (।) एवन्तावत्सदसत्कार्यवादिनोः सर्व्वस्मात्सर्व्वस्योत्पत्तिदोषस्तुल्य इति प्रतिपादितं ।

न च तयोरपि तुल्यञ्चोद्यन्न तदेको वक्तुमर्हति । सत्कार्यवादे च न[8] कश्चिज्जन्मार्थं इति प्रसाधितं तेनायमस्तीत्यधिको दोषः । तदेवङ्कदाचित्परोऽभिदध्यान्ननु भो

40a यदि नाम मयैतन्न परिहृतं भवता त्ववस्यं[? श्यं]स्थितेः किञ्चित् स्वपक्षस्य रक्षणाय[9] वाच्यं । नहि परस्य पक्षं दूषयता स्वपक्षस्थितिरनवद्या लभ्यते । न भवति नित्यः शब्दो मूर्त्तत्वात् । सुखादिभिर्व्यभिचारेणेत्यादावनित्यत्वा[1]सिद्धवदित्यत आह । असतोपि कार्यस्य कारणादुत्पादे यो यज्जननस्वभावस्तत एव तस्य जन्म नान्यस्मादिति नियम (6 a 3) इति । अपि शब्दः सम्भावनायां । इदं अत्रा[2]र्थतत्वमविद्यमानमपि तैलं तिलेभ्य एवोत्पद्यते । तदुत्पादनशक्तियुक्तत्वात् तिलानां नान्यस्मात् तज्जननशक्तिविकलत्वात्तस्य । शक्तिप्रतिनियम एव च कथमि[3]ति च पर्यनुयोगे वस्तुस्वभावैरुत्तरं वाच्यं । य एवम्भवन्ति यथा वा तथैव प्रधाना-

भावस्तत्र च तस्य जन्म नान्यस्मादिति नियमः। तस्यापि स स्वभावनिय[3]

---

न्महान् एव जायते नाहङ्कारो महतो ऽहङ्कारो न पञ्चतन्मात्राणीत्या[4]दि प्रक्रिया। तत्र च भवतः शक्तिप्रतिनियमावलम्बनमेव सरणं [? शरणं]। अन्यस्य परिहारोपायस्याभावात् (।) तदेतच्च न ममापि काकेन भक्षितं। तेन[5] यदुक्तन्न-ह्यसत्वे कश्चिद् विशेष इति तदयुक्तिमत्। कारणसामर्थ्यासामर्थ्यकृतत्वात् कार्योत्पत्यनुत्पत्योः। तस्मात् पुरोनुक्रान्तयोः प्रमाणयोः सन्दिग्धवि[6]पक्षव्यावृत्ति-कत्वसाधनकलङ्काङ्कितो हेतुरिति। भवेदेतत्तस्यापि हेतो (:) तज्जनन-स्वभावनियमः। कुतो जात इत्यत आह। तस्यापि स स्वभावनियमः। स्वहेतो[7]रिति (6a4)। तस्यापि स कुत इति चेदाह। इत्येवमनादिभावस्वभावनियम इति। न विद्यते आदिरस्येति विग्रहः अनादित्वाभ्युपगमाद्धेतुफलप्रकृति परं[8]पराया नानवस्थादोषो लघीयसीमपि क्षतिमावहत्यन्यथाऽदौ कल्प्यमाने तस्याहेतुकत्वप्रसङ्गस्तेनास्थान एवेयमाशङ्का भवत इति भावः। अथवान्यथा-
ऽ[9]यङ्ग्रन्थो व्याख्यायते (।) निष्पर्यायेणासन्नेव तद्धर्यतिशयो जायते। न च 40b
सर्व्वं सर्व्वस्माज्जायेतेति पर्यनुयोज्यं। यो यज्जननस्वभावस्तत एव तस्यातिशयो-त्पत्तिरिति शक्तिनियमसमाश्रयादिति कदाचित्स्वसिद्धान्तमनादृत्यापि परोभि-दधात्याशङ्कायां न ममाप्येतच्छक्तिप्रतिनियमावलम्बनङ्केनचिद्दण्डेन निवारित-मित्याग्र्याह। असतोपी(6a3)त्यादि। पदवि[2]भागस्तु पूर्ववत्। प्रयोगो [? प्रयोगः] पुनर्यस्य यज्जननाय समर्थं कारणमस्ति सोसन्नपि जायत एव यथातिशय-विशेषः। तज्जननाय समर्थङ्कारणमस्ति च कार्यविशेषस्येति[3] स्वभावहेतुः। तथा यो यत्राविद्यमानतज्जननसमर्थकारणः स तत्रासत्वेपि नोदेति। यथा तिलेषु घृतातिशयस्तथा चाविद्यमानतज्जननसमर्थकारणः[4] कार्यविशेषः कारण-विशेष इति व्यापकानुपलब्धिः। अपरः पर्य्यायः। साधनस्य लिङ्गस्य।

सदकारणादुपादानग्रहणात् सर्व्वसम्भवाभावात्।
शक्यस्य श[5]क्यकरणात् कारणभावाच्च सत्का[१]र्यं (॥१४)

इत्येवमादेर्वैफल्यं। साध्यस्य कर्तव्यस्य कस्यचित्संशयविपर्यासव्यवच्छेदस्य निश्चयप्रत्ययजन्मनश्चाभावात्। सर्व्वं हि[6] साधनं विवादपदे वस्तुनि संशय-विपर्यासावपनयन्तद्विषयन्निश्चयप्रत्ययमुत्पादयद्भिर्भात्ति नामानुरूपं न द्वयमप्येतत् कापिलमते सम्भवति। सदावस्थितस्य का[7]र्यस्य ह्यन्युपजननायोगात्। अथ

---

[१] सांख्यकारिका।

मः स्वहेतोरित्यनादिभावस्वभावनियमः ।

अपि च । यदि मृत्पिण्डे घटोस्ति कथं तदवस्थायां न पश्चाद्वदुपलब्धिः, तदर्थक्रिया वा । व्यक्तेरप्रादुर्भावादिति चेत् । तस्या एव तदर्थक्रियादिभावे घटत्वात्तद्रूप[4]स्य च प्रागसत्त्वात्कथं घटोस्ति (।) न हि रूपान्तर-

---

सन्नप्ययं निश्चयः साधनवचनादनभिव्यक्तं । पूर्व्वमभिव्यक्तिमुपयात्यतो न
वैफल्यमिति मतमत आह । यस्य कस्यचिदतिसय[?शय][8]स्या (6a1) भि-
व्यक्तिलक्षणस्य तत्र साध्ये निश्चयरूपे कथञ्चिदसत उत्पत्तौ प्राप्तात्साधनात्
41a सोऽतिशयस्तत्रासन्[9] कथञ्जायते । जातो वा सर्व्वातिशयः । समस्तसाध्य-
निश्चयाभिव्यक्तिलक्षणः सर्व्वस्मादन्यसाधनात् साधनाभासात् वोत्पद्येतेति तुल्यः
प्रसङ्गः । पावकादिप्रतिपत्तिहेतवो[1] धूमादयः सत्कार्यविनिश्चयाद्यभिव्यक्तिङ्कुर्यु-
रित्यर्थः । उत्पत्त्य चाभिव्यक्तिमेतदुच्यते । नत्वियमविकृतरूपेषु कृतास्पदा सा
हि तत्स्वरूपलक्षणा तद्विषयज्ञानलक्ष[2]णा । रूपान्तरप्रादुर्भावलक्षणाभावा भवेत्स्वरूपं
तावत् अविकार्यमिति न साधनैरन्यैर्वा कर्तुं शक्यते । विकारे वा पूर्व्वस्वभाववानिव
पूर्व्वरूपप्रादुर्भावश्चेत्यसत्कार्य[3]वाद एव समर्थितः पूर्वापररूपत्यागावाप्तिलक्षण-
त्वात् विकारस्य । चैतन्यस्यैकत्वादपरस्तद्विषयः प्रत्ययो न भवति परस्येति
तद्रूपाभि[4]व्यक्तिरनुपपन्ना । रूपान्तरप्रादुर्भावे च नान्यस्य किंचिदप्युपजायते
विलक्षणत्वादिति तृतीयापि व्यक्तिरसम्भविनी द्वितीयायामप्ययमनिवारितो[5] दोषः ।
तद्विषयप्रत्ययोदयेप्यर्थान्तरस्याभूतभाववैपरीत्यस्य व्यक्तेरयोगात् । न चानुप-
कारकः प्रत्ययस्य विषयः सम्भवी । तदुपकारकत्वे वा त[6]स्मादेवास्योत्पत्तिरिति
लिङ्गानपेक्षा । स्वत एव साध्यनिश्चयोस्याभिव्यक्तिरिति प्राप्तं । साधनापेक्षादेव
साध्यनिश्चयात् स्वविषयज्ञानोत्पादेनैवापेक्षातिश[7]योत्पत्तिलक्षणास्थिरेषु लब्धा-
स्पदेति प्रतिपादितं सर्व्वदा वा भवेत् । लिङ्गस्यापि सदा सन्निहितरूपत्वात् ।
लिङ्गज्ञानापेक्षायामपि तुल्यः । तस्यापि सत्वे वादिनः स[8]र्व्वकालास्तित्वादिति ।

अपि चेत्यादिना सत्कार्यवादनिराकरणे कारणान्तरमाह । तदवस्थायामिति
41b (6a4) (।) मृत्पिण्डावस्थायां पश्चाद्वदभिव्यक्तावस्थायामिव तदर्थक्रियेति[9] घट-
साध्योदकधारणविशेषाद्यर्थक्रिया । व्यक्तेरविशिष्टसंस्थानाया अप्रादुर्भावादिति
चेत् । परमतासङ्का[?शङ्का] तस्या एवेत्यादि प्रतिविधानं । एतदुक्तम्भवति ।
ग्रीवादिसन्निवे[1]शविशेषावच्छिन्न एषोर्थक्रियाविशेषकारी कश्चित् मृद्विकारो
घट इत्युच्यते नान्यः । स चेत् प्रागपि मृत्पिण्डावस्थायामपि तदाव्यक्तावस्थायामिव
तदर्थक्रियोपलब्धौ स्या[2]तां । न च भवतस्तस्मान्नास्त्येवासाविति निश्चयः समाधी-

स्य सत्त्वे रूपान्तरमस्ति । न च रूपप्रतिभासभेदे वस्त्वभेदो युक्तोऽतिप्रसङ्गात् । तस्माद्य उपलब्धिलक्षणप्राप्तस्वभा[5]वाऽनुपलब्धिः स नास्त्येव । न हि तस्य तत्स्वभावस्थितावनुपलब्धितः स्थितिश्चासत्त्वं । परस्परन्तथास्थितयोरेव दुःखसुखयोरिति . व्याप्तिर(स)द्व्यवहारनिश्चयेनानुपल[6]ब्धिविशेषस्य तेनानुपलब्ध्या कस्यचिद्व्यवच्छेदं प्रसाधयता तस्य यथोक्तोपलब्धिलक्षणप्राप्तिरूप(ता) दर्शनीया । उपदर्श्यानुपलब्धिनिर्देशासमर्थनं स्वभावा[7]नुपलब्धौ व्यापकानुपलब्धावपि (।) धर्म्मयोर्व्याप्यव्यापकभावं प्रसाध्य व्यापकस्य निवृत्तिप्रसाधनं समर्थनं (।) कारणानुपलब्धावपि कार्यकारणभावं प्रसाध्य कारणस्य निवृत्तिप्रसा[8]धनं समर्थनं ।

---

यतां किमलीकनिर्बन्धेनेति । अवस्थातुर्भावादसावप्यस्तीति चेदाह । नहि रूपान्तरस्य भावे रूपान्तरमस्ति (6 a 5) ।[3] पीत इव नीलमिति विरुद्धव्याप्तोपलब्धिराकूता । न चावस्थावस्थात्रोरभेदादसिद्धो हेतुरिति गर्जितव्यं । यस्मान्न च रूपप्रतिभासभेदेपि वस्तुभेदो युक्त[4] (:,) अतिप्रसङ्गात् । रूपप्रतिभासभेदग्रहणमुपलक्षणार्थं । तेनार्थक्रियाभेदोप्यभ्युपगन्तव्यः । एवं मन्यते । यदि भिन्नप्रतिभासि ज्ञानं भेदं साधयति तदा[5] सुखदुःखमोहानां असङ्कीर्णा भेदव्यवस्था भवेत् । नान्यथा तथा च मृत्पिण्डघटयोरपि परस्परमत्यंतम्भेद इति प्रतिजानीमहे । भिन्नाकारज्ञानपरि[6]च्छेद्यत्वात् । परस्परासम्भविकार्यकारित्वाच्चसुखादिवदिति स्वभावहेतू । अन्यथा सुखादीनामपि परस्परमभेदप्रसङ्गः शक्तिव्यक्तिवत् । विशेषो वा वाच्य इति ।[7] तस्मादित्युपसंहारः । नहि तस्य घटादेस्तस्मिन्नुपलब्धिलक्षणप्राप्ते स्वभावे स्थितौ सत्यामनुपलब्धिर्युज्यते । अथापि भवति तदाऽस्थितिश्च तस्मिन्स्वभावेऽतत्वमत[8]स्वभावत्वमुपलब्धिलक्षणप्राप्तात्स्वभावादेकान्तेन भेद इति यावत् ।

एवंस्वभाव(ा)नुपलब्धौ साधनाङ्गसमर्थनं प्रपञ्चेनाभिधाय परिशिष्टास्वनुपलब्धिष्वाचिख्यासुराह[9] । व्यापकानुपलब्धावि (6 a 8) त्यादि । धर्मयोर्यथा शिंशपात्ववृक्षत्वयोर्व्याप्यव्यापकभावं केनचित्प्रमाणेन प्रसाध्य व्यापकस्य वृक्षत्वादेर्निवृत्तिप्रसाधनं समर्थनं साधनाङ्गस्येत्यध्याहारः । यथा नास्त्यत्र शिंशपा वृक्षाभावादिति । 42a
ननु तत्र स्वभावानुपलब्ध्यैव तदभावः सिध्यति तत्किमनया । नहि निष्पादितक्रिये कर्मणि[2] विशेषाधायि साधु साधनम्भवति । साधकतमङ्करणमिति (पाणिनिः १।४। ४२) वचनात् अनधिगतार्थाधिगमरूपञ्च प्रमाणमुक्तमज्ञातार्थप्रकाशो वेति । सत्यमेत[3]त् । तथाहि नेयं सर्व्वत्र प्रयुज्यते । किन्तर्हि व्योमगतत्रपादिमात्रे यत्र सालसरलपलाशशिंशपादिपादपभेदावधारणन्नास्ति तत्र । सर्व्वथा यत्रैव[4] व्याप्या-

तद्विरुद्धोपलब्धिष्वपि द्वयोर्विरुद्धयोरेकस्य विरुद्धस्योपदर्शनं समर्थनं ।
एवमनुपलब्धौ साधनाङ्गस्यासमर्थनं साधनाङ्गावचनं तद्वादिनो निग्रह-
6b स्थानमसमर्थ[9]ने तस्मिन्व्याप्त्यासिद्धेः ॥ त् ॥

अथवा साध्यते तेन परेषामप्रतीतोर्थ इति *साधन* त्रिरूपहेतु

---

भावो न निश्चीयते क्वचित् कुतश्चिद् भ्रान्तिनिमित्तात् तत्रैवेयं प्रयुज्यते। कारणा-
नुपलब्धिरपि यत्र कार्याभावो न निश्चीयते तत्रैव प्रयोक्तव्या ना[5]न्यत्र वैयर्थ्यात्।
यथा सन्तमसे धूमाभावानिश्चये नास्त्यत्र धूमोऽग्न्यभावादिति। कार्याभावे संशयात्।
कारणाभावे च निश्चयात्। स्वभावविरुद्धोपलब्धिरपि सं[6]गविषयभावावस्थित-
गात्रस्पर्शवालाकलापाकुलानलालीढ एव व्योमादिमात्रवर्तिनिर्देशे प्रयोक्तव्या।
कारणविरुद्धोपलब्धिश्चाप्यदृश्यमानकमारोमोद्ग[7]मदन्तवीणादिभेदभावाभा वाक्य-
शक्यगानुसमीपावस्थितपुरुषसमाक्रान्तभूतल एव प्रकृतेनान्यत्र वैफल्यात्। अनया-
42b दिसा[? दिशा]ऽन्यासामप्यनुपलब्धीनाम्प्रयो[8]गविषयोऽनुसर्त्तव्य इति। तेषां स्वभाव-
व्यापककारणानां। विरुद्धास्तेषामुपलब्धयस्तास्विति विग्रहः। द्वयोर्विरोधयोर्म-
ध्ये एकस्योपदर्शनं। द्वौ पुनर्विरोधावविकलका[1]रणस्य भवतोन्यभावे भावः।
परस्परपरिहारस्थितलक्षणश्च। अनया दिशा स्वभावविरुद्धकार्योपलब्ध्यादिष्वपि
साधनाङ्गसमर्थनं सुज्ञानमेवेति नोक्तं। तथा[2]पि किञ्चिन्मात्रप्रयोगभेदादेका-
दशानुपलब्धिव्यतिरिक्तास्वपि कारणविरुद्धव्याप्तोपलब्धिकार्यविरुद्धव्याप्तोप-
लब्धिव्यापकविरुद्धकार्योपलब्धिकार्यविरुद्धका[3]र्योपलब्ध्यादिषु साधनाङ्गसम-
र्थनमुक्तम्वेदितव्यं। तासां पुनरुदाहरणानि यथाक्रमं। नात्र धूमस्तुषारस्पर्शात्।
नेहाप्रतिबद्धसामर्थ्यान्यग्निकार[4]णानि सन्ति तुषारस्पर्शात्। न तुषारस्पर्शोऽत्र
धूमात्। नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति धूमादिति।

हेतुकार्यविरुद्धाप्तभावो व्यापक[5]कार्ययोः।
विरुद्धकार्ययोरन्यः प्रतिषेधस्य साधकः ॥ (१५)
नेह धूमो हिमस्पर्शात् समर्थन्नाग्निकारणं।
नेह धूमाद्धिमस्पर्शो न शक्यं शीतकारण (१६) मिति
(—)[6]सङ्ग्रहश्लोकौ।

एवं तावदेकेन प्रकारेणासाधनाङ्गवचनत्वादिनो निग्रहस्थानमिति प्रतिपादितं।
प्रकारान्तरेणापि तदेवोपपादयति। अथवेत्यादि[7] (6b1) न चेति समुदायश्चायमत्रा-
वृत्या पूर्वोदितार्थपरित्यागेनार्थान्तरसमुच्चये वर्त्तते॥ ननु धवस्थित्याथवा खदिर-
43a मित्यादाविव पूर्वार्थपरित्यागेन विकल्पादिवि[8]धस्याप्यर्थस्य विवक्षितत्वात्। इह

वचनसमुदायः । तस्याङ्गं पक्षधर्म्मादिवचनं तस्यैकसाध्यवचनमसाधनाङ्गवचनं, त[1]दपि वादिनो निग्रहस्थानं, तदवचने हेतुरूपस्यैवावचनमवचने च सिद्धेरभावात् ॥ त् ॥

अथवा तस्यैव साधनस्य यन्नाङ्गं प्रतिज्ञोपनयनिगमनादि तस्या साधनाङ्गस्य साध[2]नवाक्ये उपादानं वादिनो निग्रहस्थानं, व्यर्थाभिधानात् ॥ त् ॥

---

च पर्याये साधनशब्दः करणसाधनः। इहाङ्गशब्दोऽवयववचनः पूर्वस्मिन्कारणवचन इति विशेषः। त्रिरूपहेतुवचन[1]समुदायग्रहणेन तेषु लक्षणादिवचनानां साधनत्वं तिरयति। स्याद् बुद्धिः साधर्म्यवति प्रयोगेनासपक्षे हेतोरसत्वमुच्यते। वैधर्म्यवति च न सपक्षसत्वमनन्तर[2]मेव निषेध्यमानत्वात्। तत्कथन्तस्यैकस्याप्यवचनमसाधनाङ्गवचनमित्येतन्न वक्ष्यमाणे व्याहतमिति। एतच्च नैवमेव हि व्याख्यायते। त्रिरूपो हेतुरर्थात्मकः।[3] परमार्थतोवस्थितस्तस्य वचने ये प्रकाशके पक्षधर्मवचनं सपक्षसत्ववचने पक्षधर्मवचनं विपक्षसत्ववचने वा तयोस्समुदायः तस्य व[4]चनद्वयसमुदायस्याङ्गम्पक्षधर्मादिवचनमिति पक्षधर्मवदनन्तावदविचलमितरयोः त्वन्यतरान्यतरत् कादाचित्कं। तेन वचनद्वयसमु[5]दायरूपस्याङ्गिनोऽङ्गं द्विविधमेव सदा तस्येदानीमङ्गस्यैकस्याप्यवचनमसाधनाङ्गस्वचनं। न केवलं द्वयोः प्रथमव्याख्यानुसारेणेत्यपि श[6]ब्दात्। द्वयोर्ह्यवचनं तूष्णीम्भावः। स चोक्तोऽप्रतिभया तूष्णींभावादिति पर्यायान्तरमप्याह।

अथवे(6b1)त्यादि। तस्यैवेति त्रिरूपवचनसमुदायस्य यन्नाङ्गं ना[7]वयवः। कथं पुनः प्रतिज्ञादीनामसाधनाङ्गत्वमिति चेत्। उच्यते। प्रतिज्ञावचनसाधनं। साक्षात् पारंपर्येण वा तस्याः सिद्धेरनुत्पत्तेः तथाह्यर्थ ए[8]व प्रतिबन्धार्थंङ्गमयति। नाभिधानमर्थप्रतिबन्धविकलत्वात् तस्मात् प्रतिज्ञावचनं हेतुवचनं वा न साक्षात्साधनमर्थसिद्धौ। संशयश्च पक्षवचनादयं दृष्टो[9] न 43b
निश्चयस्तदतोपि न साक्षात् साधनं। स्यान्मतं संशय एवासिद्धः पक्षवचनाद्वादिप्रतिवादिनोर्निश्चितत्वादथान्येषां भवति। एवं सति कृतकत्वादिवचनेप्यव्युत्पं [?व्युत्पन्][1]नानां संशयो भवतीत्यनेकान्तः। तदेतदसम्बद्धं। वादिप्रतिवादिनो हि निश्चितत्वमेकस्मिन् वा धर्मेऽनित्यत्वादिके प्रत्याययितुमारब्धे भवेत् प्रत्यनीकधर्मद्वये वा ॥[2] न तावदेकस्मिन् विवादाभावतः। साधनप्रयोगानर्थक्यप्रसङ्गात् (।) नापि प्रत्यनीकधर्मद्वये वस्तुनो विरुद्धधर्मद्वयाध्यासप्रसङ्गात्। यदाह्येकस्मिन्वस्तुनि प्रमा[3]णबलेन विरुद्धौ धर्मौ वादिप्रतिवादिभ्यां निश्चितौ भवतस्तदा तद्वस्तु

द्व्यात्मकं प्राप्तं । अथ न प्रमाणसामर्थ्यात् तौ निश्चितावपि तु स्वस्मात्स्व-स्मादाग[4]मात् । एवमपि तु धर्मयोः प्रमाणेन निश्चयात् कथन्न पक्षवचनात् संशयो भवतीति वाच्यं । तस्मात् पक्षवचनं न साक्षात् साधनं । नापि पारम्पर्य्येण सा[5]ध्या-भिधायकत्वेनासिद्धे हेतुदृष्टान्ताभासोक्तिवदशक्यसूचकत्वात् । हेतुवचनन्तु शक्य-सूचकत्वात् शक्तितः साधननिष्टं सदोच्यते साधनाङ्गम्प्रतिज्ञाव[6]चनत्वे सति साधनोपकारकत्वाद्धेतुवचनवत् । साधनविषयप्रकाशनद्वारेण च प्रतिज्ञासाधनम-नुगृह्णाति । अन्यथाह्यविषयं तत्साधनं प्रवर्त्तते । ज्ञा[7]नात्ममनःसन्निकर्षादीनामपि साधनोपकारकत्वमतो वचनत्वे सतीति विशेषणं । इतश्च साधनाङ्गसाध्यसाधन-विषयप्रकाशनात् दृष्टान्तवचनवदिति ।[8] इदमप्यत्यर्थमसारं । यस्मादनित्यं शब्दं साधयेत्यभ्यर्थना ह्यवचं वचनत्वे सति साधनोपकारकं साध्यसाधकविपर्ययप्रकाश-

44a कञ्च न च तदन्तरङ्गं साध्यसिद्धा[9]वाङ्गं । को वा विषयोपदर्शनस्योपयोगो यदि ह्यनेन विना न साध्यसिद्धिः स्यात् । सर्व्वं सोभेत[? शोभेत] यावता विनाप्यनेन यावत् । (यः) कश्चित्कृतकः स सर्वोऽनित्यो यथा कुम्भादिः[1] शब्दश्च कृतक इत्यनु-क्तेपि पक्षशब्दोऽनित्य इत्यर्थाङ्गमात्र एव । तस्मादस्य निर्देशो निरर्थक एव । स्यादयं विपर्यासो यदि हेतुव्यापारविषयोपदर्शनाय पक्षवद्[2] वचनन्नैव प्रयुज्यते तदा कथम्पक्ष-समाश्रयलब्धव्यपदेशा । पक्षधर्मत्वादयः सम्पद्यन्ते । तेषु वा निश्रितात्मसुसम्भूत-सामर्थ्यात् पक्षगतिरसम्भाव्यैव । सामर्थ्य[3]लभ्यपक्षबलेन पक्षधर्मत्वादयः सम्पद्यन्त इत्यप्ययुक्तं । तेष्वसत्सु सामर्थ्यलभ्यस्यैव पक्षस्यासम्भवात् । अन्योन्याश्रयं चेदम्पक्ष-धर्मत्वादिसामर्थ्या[4]यातपक्षवशेन पक्षधर्मत्वादयः सम्पद्यन्ते । पक्षधर्मत्वादिबलेन च पक्ष इति । तदत्रोच्यते । न खलु साधनकाले पक्षधर्मत्वादिविकल्पोऽस्ति के[5]वलं यत्रैव जिज्ञासितविशेषे धर्मिणि शब्दादौ तु च करीशादिस्थगिततेजसि वा कुण्डादौ यो धर्मः कृतकत्वधूमत्वादिलक्षणोनुमानतः प्रत्यक्षतो[6] वा प्रतीयते । प्रत्याय्यते वा । तद्विशेषयोगितया वा निश्चितेऽपरस्मिन्घटमहानसादावस्थितत्वेन स्मर्यते तद्विशेषविरहिणि वा गगनसागरादौ नास्तित्वेनै[7]व स्मर्यते । स वस्तुधर्मतयैव विनापि पक्षधर्मत्वादिव्यपदेशेन तत् धर्मिणं जिज्ञासितधर्मविशिष्टं सामर्थ्यादेव प्रतिपादयति । स चास्य सामर्थ्यविषयः पक्ष[8] इति गीयते । ततः पश्चात् तत्समाश्रय-भाविन्यो यथेष्टपक्षधर्मत्वादिसंज्ञाः शास्त्रेषु संव्यवहारार्थम्प्रतन्यन्ते । यदि वा प्रत्या-

44b लोचनप्रकरणबलात् साधनका[9]लेपि भवन्तु पक्षधर्मत्वादिविकल्पाः । कथं योहि वस्तुनो धर्मो वादिना विवा(दा)स्पदीभूतधर्मिविशिष्टतया साधयितुमिष्टः स पक्षस्तस्य योन्यो धर्मः स पक्षधर्मः ।[1] प्रकृतसाध्यधर्मसामान्येन च समानोर्थः सपक्षः। तद्विरही

वासपक्ष इति। यस्यापि हि साधनकाले पक्षप्रयोगोस्ति तस्यापि न वाद्यकाण्डमेव पक्षं जातेऽनि[2]त्यः शब्द इति। कस्तु प्रस्तावान्तरेना[?रेणा]पि प्रकरणबलेनैव पक्षधर्मत्वादयोपि वक्तव्या (:)। तच्च पक्षप्रयोगदूषकस्यापि समानं। तस्मात्प्रतिज्ञावचनं न साधनां[3]गं।

उपनयनिगमनवचनन्तु यथा न साधनाङ्गन्तथोच्यते ॥ तत्रतावदुदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साधनस्योपनयः (न्या० सू० १।२।३८)। यथा त[4]थेतिप्रतिबिम्बनार्थं। किम्पुनरत्र प्रतिबिम्बनन्दृष्टान्तगतस्य धर्मस्याव्यभिचारत्त्वे सिद्धे। तेन साध्यगतस्य तुल्यधर्मता। एवञ्चायङ्कृतक इति सा[5]ध्येन सह सम्भव उपनयार्थः। ननु च कृतकत्वादित्यनेन सम्भव उक्तः। नोक्तः। साध्यसाधनधर्ममात्रनिर्देशात्। साध्यसाधनधर्ममात्रनिर्देशः कृ[6]तकत्वादनित्यः शब्दो भवति। तत्पुनः शब्दे कृतकत्त्वमस्ति। नास्तीत्युपनयेन सम्भवो गम्यते। अस्ति च शब्दे कृतकत्वमिति। तथा च हेतुवचनाद् भिन्नार्थप्रतिपाद[7]कत्वमुपनयस्याभिन्नरूपत्वे प्रसिद्धपर्यायव्यतिरिक्तत्वे च सति हेतुवचनोत्तरकालमुपादीयमानत्वात् दृष्टान्तवचनवदिति शक्येत अनुमातुं।

हेत्वपदेशात्[8] प्रतिज्ञायाः पूनर्वचनन्निगमनं (न्या० सू० १।१।३९)।
प्रतिज्ञायाः पुनर्वचनमिति प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ विपरीत-
प्रसङ्गप्रतिषेधार्थं यत्पुनरभिधानं[9] तन्निगमनं। न पुनः प्रतिज्ञाया एव 45a
पुनर्वचनं। किङ्कारणं यस्मात्प्रतिज्ञासाध्यनिर्देशः सिद्धनिर्देशो निगमनमिति।
पुनः शब्दश्च नानात्वे दृष्टः(।) पुनरियमचिरप्रभा नि[1]श्चरति। पुनरिदङ्गन्धर्व्वनगरं दृश्यत इति। अत्र च सामर्थ्यादुपनयानन्तरभावी हेत्वपदेशो गृहचते। न प्रतिज्ञानन्तरभावी। असम्भवात्। नहि कश्चित्प्रतिज्ञा[2]नन्तरं हेत्वपदेशान्निगमनं प्रयुंक्ते। अनित्यः शब्दः कृतकत्वात्। तस्मादनित्यः शब्द इति। अतश्च प्रतिज्ञार्थवाक्याद् भिन्नार्थं निगमनवचनं। प्रतिज्ञावाक्याद् भिन्न[3]रूपत्वे सति हेतुवचनोत्तरकालमभिधीयमानत्वात् दृष्टान्तवचनवत्। न च साध्यार्थप्रतिपादकन्निगमनं। शब्दान्तरोपात्तस्यावधारणरूपेण प्रवृत्तत्वात्। योय[4]मागच्छत्ययं विषाणीति केनचिदुक्ते तस्मादनश्व इत्यादिवचनवत्। तस्माच्छब्दसहितं वाक्यम्विचारविषयाय प्रसाध्यार्थप्रतिपादकन्न भवति। का[5]रणोपदेशोत्तरकालमुपात्तत्वात्। दृष्टान्तः पूर्ववत्। तदेतत् प्रतिषिध्यते न खल्वेवं प्रयोगः क्रियते। अनित्यः शब्दः कृतकत्वात्। प्रतिज्ञाप्रयोग[6]स्यानन्तरं निराकृतत्वात्। अपि तु कृतकः शब्दः। यश्चैवं स सर्वोऽनित्यो यथा कलशादिः। यो वा कृतकः स सर्व्वोऽनित्यो यथा घटादिः।

तथा च कृतकः शब्द इ[7]त्येवमुभयथा यथेष्टं प्रयोग(:) क्रियते । साध्यसिद्धेरुभ-
यथापि भावात् । तत्र यदि कृतकः शब्दो यश्चैवं स सर्व्वोऽनित्यो यथा घटादि-
45b रित्यभिधाय तथा कृत[8]कः शब्द इति प्रतिबिंबनार्थं[9] मुपनयवचनमुच्यते । तदे[? दि]-
दमनर्थकं[1] विनाप्यनेन प्रतिबिंबनेनानन्तरोक्तप्रयोगमात्रात् प्रतीतिभावात् ।
साधनञ्च यदनर्थकं न तत्साधनवाक्ये विद्वद्भिरुपादेयं । तद्यथा दशदाडिमादि
वाक्यं तथा[2]चानर्थकं प्रतिबिंबनार्थमुपनयवचनमिति व्यापकविरुद्धोपलब्धेः ।
स्वार्थानुमितावप्ययमेव न्यायो दृष्टो नहि कश्चित्सचेतनः कृतकत्वस्य भावं शब्दे
गृही[3]त्वा तस्य चाविनाभावित्वमनुस्मृत्य तथा च कृतकः शब्द इति प्रतिबिम्बनार्थं-
करोति । अथापि यः कृतकः स सर्व्वोऽनित्यो यथा घटः । तथा च कृतकः शब्द
इ[4]ति सम्भवप्रदर्शनार्थमुपनयवचनमुच्यते । तदेतद् द्वयमप्यङ्गीकुर्मः । प्रतिज्ञा-
नन्तरभाविनस्तु साधनमात्रनिर्देशमनित्यः शब्दः कृतकत्वादित्येव[5] न प्रतिपद्यामहे ।
प्रतिज्ञायाः प्रयोगाभावात् । ततश्चोपनयस्यावयवान्तरत्वप्रतिपादनायोक्तो
हेतुरसिद्धतोरगदष्टत्वाङ्गतावशक्त एव । यत्[6] पुनरिदं सिद्धार्थनिर्देशलक्षणं निग-
मनं पौनरुक्त्यपरिहाराय वर्ण्यते तन्नैवोपपद्यते विना निगमनेनार्थसिद्धेरेव पञ्चा-
वयवसाधनवादिनोऽनुपपत्तेः[7] अन्यथा निगमनात् प्रागेवार्थस्य सिद्धत्वात् व्यर्थतया
न साधनाङ्गन्निगमनम्प्राप्नोति । ततश्च नेदमुपादेयं साधनवाक्ये सिद्धमित्य-
प्रतिज्ञा । भवेद्व्यामोहो विप्र[8]तिपन्नस्य प्रमाणान्तरव्यपेक्षा नास्तीति सिद्धमनित्यत्व-
मुच्यते । निगमनं तु प्रतिविषयस्यार्थस्याशेषप्रमाणोपपत्तावशेषावयवपरामर्शेनाव-
46a धारणार्थम[9]नित्य एवेति प्रवर्त्तत इति । यदि तर्हि प्रमाणान्तरव्यपेक्षा नास्ति तर्त्तर्हि
(साध्यं) सामर्थ्यादवधार्यत एव । तथाहि यदकृतकन्तदनित्यमेव । यथा कुण्डादि-
शब्दश्च कृतक[1] इत्येवमनि(त्य)त्वाविनाभाविनः कृतकत्वस्य शब्दे भावख्यातौ
तत्सामर्थ्यादेवानित्यः शब्द इति निश्चयो भवति (।) तदस्य वचनं सामर्थ्यं प्रतीता-
र्थप्रत्यायकत्वात् पुनरुक्तमनु[2]पादानार्हञ्च । न चात्र विपर्ययप्रसङ्गस्य लेशोप्या-
शङ्कच्यते । येन तद्व्यवच्छेदाय सफलमेतस्योपादानं स्यात् । अनित्यत्वेनैव कृतकत्वस्य
व्याप्तिप्रसाधनात् । प्रयोगस्तु[3] (।) यत्सामर्थ्यात् प्रतीयते न तस्य वचनम्प्रेक्षावता
कर्त्तव्यं । तद्वचनम्पुनरुक्तम्वा तद्यथा गेहे नास्ति कुमारो जीवति चेत्येतत्सामर्थ्यात्
प्रतीयमानस्य तद्बहि[4]र्भावस्य वचनं । पक्षधर्मान्वयव्यतिरेकतद्वचनसामर्थ्याच्च
प्रतीयते तस्मादनित्य एवेत्येवमादिना पुनः सिसाधयिषितोर्थः प्रथमसाध्यापेक्षया[5]
व्यापकविरुद्धोपलब्धिर्द्वितीयसाध्यापेक्षया च स्वभावहेतुः । अत एव निगमनस्या-
वयवान्तरत्वप्रतिपादनायोक्ता हेतवोऽसिद्धाः । तदप्येतेनैव प्र[6]त्युक्तं । यदाह ।

---

प्रत्ययेक्ष(?) प्रतिज्ञादीन्वाक्यार्थप्रतिपत्तये ।

अन्वयव्यतिरेकवचनयोर्वा साधर्म्यवति (वै)धर्म्यवति च साधनप्रयोगो [?ग] एकस्यैवाभिधानेन सिद्धेर्भावात् द्वितीयस्या[3]सामर्थ्यमिति तस्याप्यसाधनाङ्गस्याभिधानं निग्रहस्थानं व्यर्थाभिधानादेव ।

ननु च विषयोपदर्शनाय प्रतिज्ञावचनमसाधनाङ्गमप्युपादेयमेव । न (।) वैयर्थ्यादसत्यपि[4]प्रतिज्ञावचने यथोक्तात्साधनवाक्याद्भवत्येवेष्टार्थसिद्धिरित्यपार्थकं तस्योपादानं ( । ) यदि च विषयोपदर्शनमन्तरेण प्रतीतेरुत्पत्तिः (।) कथन्न प्रतिज्ञासाधनादयः ।[5] न हि पक्षधर्म्मादिवचनस्यापि प्रतीतिहेतुभावादन्यः साधनार्थः स प्रतिज्ञावचनेपि तुल्य इति कथं न साधनं (।) केवलस्यासामर्थ्यादसाधनत्त्वमिति चेत् । तत्तुल्यं पक्ष[6]धर्म्मवचनस्यापीति तदपि न साधनावयवः स्यात् । नहि पक्षधर्म्मवचनात् केवला प्रतिपत्तेरुत्पत्तिः । एतेन संशयोत्पत्तिः प्रत्युक्ता (।) पक्षधर्मवचनादपि केवलादप्रदर्शि[7]ते सम्बन्धे संशयोत्पत्तेः । तस्माद्व्यर्थमेव साधनवाक्ये प्रतिज्ञावचनोपादानं वादिनो निग्रहस्थानं ॥ तू ॥

---

प्रोच्यमानन्निगमनं पुनरुक्तन्न जायते ॥ (१७)
विप्रकीर्णैश्च वचनैर्नैकोर्थः प्रतिपाद्यते ।
तेन सम्बन्धसि[7]ध्यर्थम्वाच्यन्निगमनं पृथग् (॥१८)
इत्यलमतिप्रसारिण्या कथया ॥ ० ॥

अन्वयव्यतिरेकयोर्वेति पर्य्यायान्तरकथनमुपादानमिति (न्या० सू० २।१।१२) वर्तते द्वितीयस्यासामर्थ्यं जातायाः[8]सिद्धेः पुनरजन्यत्वात् । (प्रमाण-)समुच्चय टीकाकारास्त्वाहुः नन्वि(6b4)त्यादि । ने(6b4)त्याद्युत्तरः । यदि चेत्युपचयहेतुः । साधनावयवः प्रतिज्ञां प्राप्नोति नियमेन साध्यप्रतीतिनि[9]मित्तत्वात् 46b
पक्षधर्मादिवचनवत् । सन्दिग्धव्यतिरेको हेतुरिति चेदाह । नहि पंक्षधर्मवचनस्यापीति (6b6) । तत्तुल्यमिति विरुद्धानैकान्तिकयोः पक्षधर्मसद्भावेप्यगमकत्वात्[1] । तत एव संसयो [? संशयो]त्पत्तेः पक्षधर्मवचनन्न साधनं साधारणादिवचनवदिति चेदाह । ऐतेन (6b7) तत्तुल्यमित्यादिना संशयोत्पत्तिः प्रत्युक्तेति । एतदेव व्यनक्ति पक्षधर्म[2]वचनादपीति । तदनेनानन्तरस्य हेतोर्व्यभिचारङ्कथयति ।

ननु च पक्षधर्मस्य श्रावणत्वादेरप्रदर्शिते सम्बन्धेनैव साधनावयवत्वमतो विपक्षत्वाभावान्न व्यभि[3]चारः । प्रदर्शिते तु सम्बन्धे साधनावयवत्वं तदा च तस्मात् संशयो नास्तीति सुतरान्नानेकान्त इति ॥ एवं मन्यते । पक्षवचनेपि तुल्यमे(6b6)तदिति तदपि सा[4]धनं स्यात् । अथ प्रतिपद्येथा सत्यं स्याद्यदि साध्यं स्यान्न चास्त्यन्यतः

अथवा साधनस्य सिद्धेर्यन्नाङ्गं (अ)सिद्धो विरुद्धोऽनैकान्तिको वा हे[8]त्वाभासः तस्यापि वचनं वादिनो निग्रहस्थानमसमर्थोपादानात्। तथा साध्यादिविकलस्यान्वयाप्रदर्शितान्वया (?) तैरपि दृष्टान्ताभासस्य साधनाङ्गस्य वचनमपि वादिनो निग्रह[9]स्थानमसमर्थोपादानादेव। नहि तैर्हेतोः सम्बन्धः शक्यते प्रदर्शयितुमप्रदर्शनादसा(म)र्थ्यं।।त्।।

अथवा सिद्धिः साधनं तदङ्गं धर्म्मो यस्यार्थस्य विवादाश्र(य)स्य
7a वादप्रस्तावहे[10]तोः स साधनाङ्गः (।) तद्व्यतिरेकेणापरस्याप्यजिज्ञासितस्य विशेषस्य शास्त्राश्रयव्याजादिभिः प्रक्षेपो मोषणञ्च परव्यामोहनानुभाषणशक्तिविघातादिहेतोः। तदप्यसाधनाङ्गवचनं, वादिनो नि[1]ग्रहस्थानमप्रस्तुताभिधानात्।

एभिः कथाविच्छेद एव। तथा विशेषसहितस्यार्थस्य प्रतिवा-

---

साध्यसिद्धः। न च निष्पादितक्रिये दारुणि दात्रादयः कञ्चनार्थं पुष्यन्ति। अप्रदर्शिते तु संब[5]न्धे संशयोत्पत्तिहेतुत्वादिदमुक्तन्तत एव संसयो[? संशयो]त्पत्तेरिति। यद्येवं न तर्हि तत्प्रयोगमन्तरेण साध्यसिद्धेरभाव इति व्यर्थ एव तत्प्रयोगः स्यात्[6] अन्यथा कः पक्षवचनं साधनादपाकर्त्तुं समर्थः। ततश्च त्रिरूपलिङ्गाख्यानं परार्थमनुमानमित्याद्याचार्यवचो व्याहन्येत। कथं तर्ह्युक्तं।

पक्षधर्मत्वसम्बन्धसाध्योक्तेरन्यवर्जनमिति नास्ति विरोधः। पक्षधर्मत्वसंबन्धाभ्यां साध्यस्योक्तिप्रकास [? प्रकाश]नमाक्षेपस्तस्मादन्येषां पक्षोपनयवचनादीनामुपादेयत्वेन साधनवाक्यवर्जनमि[8]ति व्याख्यानात्। विवरणेप्ययमर्थो यस्मात् पक्षधर्मत्वसम्बन्धवचनमेवान्वयव्यतिरेकाभ्यामविवक्षितार्थसिद्धिकारणं युक्तं नान्यत्।
47a तस्मादनुमेयस्योपदर्शनार्थं[9]सिद्ध्यर्थं पक्षवचनमुपादेयं नान्यदित्युपस्कारः। पक्ष उच्यते आक्षिप्यते प्रकाश्यते अनेनेति पक्षवचनन्त्रिरूपं लिङ्गं। आक्षेपो ह्यभिधानतुल्य इति वचनमित्युक्तं वचेर[1]नेकार्थत्वाद्वा। अस्माकं तु (।)

तत्रानुमेयनिर्देशो हेत्वर्थविषयो मत (१९)

इत्यपि वचनं विरुध्यते। यस्मा

तत्रेति तर्कशास्त्रस्य सम्बन्धोत्राभिधीयते।
प्रयोगस्य तु सम्बन्धे बहु स्यादसमं[2]जसं ।।(२०)
तस्यैव प्रकृतेरुक्तमेतच्चास्यैव लक्षणे।
परविप्रतिपत्तीनान्निषेधाय विशेषत (।।२१)

इत्यलं प्रसङ्गेन ।। ० ।।

तद्भावरूपं साधनमङ्गन्धर्मो विषयित्वेन। यस्यार्थस्य[3] प्रस्तुतस्य स साध-

दिनोऽजिज्ञासितत्वात् । जिज्ञासायामदोषो जिज्ञासितं पुनरर्थस्य अन्यस्य प्रसङ्गपरंपरया ये[2] ष ( ? ) पन्नादिना बहिःप्रतिवादिनः । प्राश्निकानाञ्च न्यायदर्शिनामिति । एभिः कथाविच्छेद एव करणीयो, नहि कश्चिदर्थः क्वचित्क्रियमाणप्रसङ्गे न प्रयुज्यते । नैरात्म्यवादिनस्तु तत्साधने नृत्यगीत्यादेर[3]पि तत्र प्रसङ्गात् । यथा प्रतिज्ञाभिधानपूर्वकं कश्चित्कुर्यात् । नास्त्यात्मेति वयं *बौद्धा* ब्रूमः । के बौद्धाः । ये बुद्धस्य भगवतः शासनमभ्युपगताः । को बुद्धो भगवान् (।) यस्य शासने[4] भदन्ता*श्वघोषः* प्रव्रजितः । कः पुनर्भदन्ताश्वघोषः (।) यस्य *राष्ट्रपालं* नाम नाटकं (।) कीदृशं राष्ट्रपालं नाम नाटकमिति (।) प्रसंगं कृत्वा नान्द्यन्ते ततः प्रविशति सूत्रधार इति ।[5] पठेन्नृत्येद् गायेच्च । प्रतिवादी तच्च सर्वप्रसंगं नानुकर्तुं समर्थ इति पराजितः स्यादिति । सत्यसाधुसम्मतानाम्विदुषां तत्त्वचिन्ताप्रकारः । न चैवं प्रस्तुतस्य पर्यवसानं स[6] भवति अनिश्चयफलत्त्वादनारम्भ एव वादस्य ।

कथञ्चैवं जयपराजयौ प्रतिवादिनोप्य(न)नुभाषणस्यैवंप्रकारस्य प्रसंगस्य विस्तरेणानुभाषणव्याजेन सम्भवादनि[7]श्चितत्वाच्च । तस्मात्प्रतिज्ञावचनमेव तावन्न न्याय्यं कुतः पुनस्तत्राजिज्ञासितविशेषप्रसङ्गोपन्यासः । तद्व्याख्याप्रसङ्गवितथप्रलापश्च । सर्वश्चायं प्रकारो दुर्म्मतिभिः शठैर्न्याय[8]सामर्थ्येनार्थप्रतिपादनेऽसमर्थैः प्रवर्तितो । यथा पुरुषातिशयपूर्वकानि तनुकरणभुवनादीनीति प्रतिज्ञाय तनुकरणभुवनव्याख्याव्याजेन सकल*वैशेषिक*शास्त्रार्थघो[9]षणं, नित्यः शब्दोऽनित्यो वेति (।) वादे वादलक्षणप्रपञ्चप्रकाशनशास्त्रप्रणेतु*र्जैमिनि* प्रतिज्ञाततत्त्वनित्यताधिकरणशब्दघटान्यतरसद्वितीयो घट इति प्रतिज्ञामुपर[10]

---

नाङगस्तस्यैवाभिव्यक्तिरुत्तरेण पदद्वयेन ॥ अजिज्ञासितं प्रतिवादिनाऽशास्त्राश्रयव्याजादिभिरित्यादिपदेनासम्बद्धप्रसङगपरिग्रहः । प्रक्षे[4]पो नाममात्रेण घोषणं विस्तरेण । यथा बुद्धीन्द्रियदेहकलापव्यतिरेकात्मास्ति नास्तीत्येतावत् मात्रे बुभुत्सिते नैयायिकाः प्रमाणयन्ति । सदाद्यविशेषवि[5]षया विषयज्ञेयविषया मदीयाः प्रत्यक्षादयः प्रत्यया मदीयशरीरादिव्यतिरिक्तसम्वेदकसम्वेद्याः स्वकारणायत्तजन्मवत्वादिभ्यः पुरुषान्तर[6]प्रत्ययवदिति ततः सदनित्यन्द्रव्यवत् कार्यकारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेष इति महता व्यासेन सदाद्यविशेषाद् व्याचक्षते । नह्यत्र स[7]दाद्यविशेषविषया विषयज्ञेयविषयत्वन्धर्मविशेषणं कथंचिदपि प्रकृतसाध्यसिध्युपकारि । परव्यामोहनानुभाषणशक्तिविघातादिहेतोरित्यत्रादिश[8]ब्देनोत्तरप्रतिपत्तिशक्तिविघातहेतोः परिग्रहः क्रियमाणः प्रसङगो-

7b चय्य द्वादशलक्षणार्थव्याख्यानं(*कुमारिलस्य*)सर्वोयं दुर्म्मतीनामसामर्थ्य-प्रच्छादनोपायो न तु सत्यैरस्त्युपेतः। तत्त्वपरीक्षायां फलादिप्रतिसरण-दण्डप्रयोगादीनामयुक्तत्वात् (।) भवत्येव नाट[1]कादिघोषणेऽर्थान्तरगमना-त्पराजय इति चेत् । अन्यस्याप्यजिज्ञासितस्य किन्न भवति। नहि तस्यापि काचिद्विवक्षितसाध्यधर्मसिद्धौ नान्तरीयकता। यथा हेतुप्रत्यय-पारतन्त्र्यलक्षण[2]संस्कारदुःखतादिसिद्धिमन्तरेण नानित्यतासिद्धिः। तथा-विधस्तु धर्म ( : ) पृथगनुक्तोपि साध्यधर्मेऽन्तर्भावात् पक्षीकृत एवेति न पृथगस्योपन्यासो व्याख्यानं वा ( । ) तस्मादेवंविधस्यापि त[3]दानीं प्रति-वादिनो जिज्ञासितस्यार्थस्य प्रतिज्ञायामन्यत्रैवोपन्यासो व्याख्यानं वा ऽर्थान्तरगमनान्निग्रहस्थानमेव। तेन जिज्ञासितधर्म्ममात्रमेव साधनाङ्गं वाच्यं। न प्रसङ्ग[4] उपक्षेप्तव्यः। तदुपक्षेपेतिप्रसङ्गात्। एवमसाधनाङ्ग-

---

यस्येति विग्रहः। नैरात्म्यवाद्युदाहरणेन किं ज्ञापयति। यत्र नाम विहितप्रतिसिद्धो
47b [? प्रतिषिद्धो ] वा[9]दिदोषगुणसौगतधर्मविनयस्याप्यहङ्कारनिमित्तसकलोद्ध वादिमलक्षालनायोद्यतमत्रैव नात्मवादिनस्तत्साधने नृत्यगीतादेः प्रसङ्गः। तत्रान्येषामन्यस्य च का ग[1]णना। ननु च वयं बौद्धा ब्रूम इति कथं यावता सविशेषणस्य प्रतिषेधाभिधानात्। अहम्बौद्धो ब्रवीमीति भवितव्यं। यथाहं गार्गो [? गार्ग्यो] ब्रवीम्यहं पटु ब्रवीमि इति न च बहु[2]ष्वेवेतद्बहुवचनमिति (पाणिनिः १।४।२१) शक्यमभिधातुँ कश्चिदिति वचनात्। नैव यस्मादसावात्मनि परान् स्वयूथ्यानप्यन्यान्बहूनपेक्ष्य तथा प्रयुक्तवान्। ईदृश्यामेव च वादिनो विवक्षा[3]यामिद-मुक्तमुदाहरणं नान्यस्यामिति प्रतिपत्तव्यं (।) अथवा जडशाब्दिकाभिनिवेशनिवा-रणायेदमेवमुक्तं तथा च व्यर्थता शब्दानुसासन [? नुशासन] स्य प्रतिपादयि[4]ष्यति। अत एवान्येन महारथेनापीदं प्रयुक्तं॥

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता। (२२) इति।

सभ्यः साधुसंमतानामित्युपहसति। अहो[5]शब्दश्चेहाध्याह्रियते। द्वादशा-नाम्प्रमाणादिलक्षणानां यः प्रपञ्चो विस्तरस्तस्य प्रकाशनाय यच्छास्त्रं मीमांसा-ख्यं तस्य प्रणेता स चासौ जैमिनिश्च तेन प्र[6]तिज्ञातं यत्तत्वं नित्यताभिधानं।

वचनं वादिनो निग्रहस्थानं प्रतिवादिना तथाभावे प्रतिपादिते । अन्यथा द्वयोरेकस्यापि न जयपराजयाविति[5] ॥ त् ॥

अदोषोद्भावनं प्रतिवादिनो निग्रहस्थानं (।) वादिना साधने प्रयुक्तेऽभ्युपगतोत्तरपक्षो यत्र विषये प्रतिवादी यदा न दोषमुद्भावयति तदा पराजितो वक्तव्यः[6] ।

साधनदोषाः पुनर्न्यूनत्वमसिद्धिरनैकान्तिकता वादिनः साधयितुमिष्टस्यार्थस्य विपर्ययसाधनमष्टादश दृष्टान्तदोषाश्च तेषामनुद्भा(व)नमप्रति-

---

तस्याधिकरणं यः शब्दः स च घटश्च तयोरन्यतरस्तेन स द्वितीयो घट इतीत्थं प्रतिज्ञामुपरचय्य द्वादशलक्षणादिव्याख्यानङ्करो[7]ति । प्रमाणलक्षणमेव तावदेकं महता कालेन व्याचष्टे । चोदनालक्षणो धर्म (मीमांसा सू० १।१।२)श्चोदनेति क्रियायाः प्रवर्तकम्वचनमाहुश्चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहि[8]तं विप्रकृष्ट(···) मर्थं शक्नोत्यवगमयितुं नान्यत् किञ्चनेन्द्रियं* (।)तथाहि (सत्)संप्रयोगे पुरुषस्येन्द्रियाणाम्बुद्धिजन्म तत्प्रत्यक्षं । अनिमित्तं विद्यमानोपलम्भनत्वा[9]दि (मीमांसा सू० १।१।४) त्यादिना । संस्कारदुःखतासिद्धिमन्तरेण 48a
नानित्यतासिद्धिरप्रतीत्य समुत्पन्नस्य क्षणिकत्वायोगात् । स तर्हि तादृशो धर्मः पृथग्वाच्यो नेत्याह । तथाविधस्त्वित्या[1]दि । एवंविधस्यापि प्रस्तुतसाध्यधर्मनान्तरीयकस्य प्रतिवादिनाऽजिज्ञासितस्य तद्व्यतिरेकेण प्रतिज्ञायामन्यत्र चाहेतुदृष्टान्तयोः कदा पुनरेतदसाधना[2]ङ्गवचनं यथोक्तं निग्रहस्थानमित्याह । प्रतिवादिना तथाभावेऽसाधनाङ्गत्वे प्रतिपादिते सति । यदा तु न प्रतिपादयति तदा द्वयोरेकस्यापि न जयपराजयौ भवत(ः)[3]कुतः साधनानभिधानान्न वादिनो जयः । प्रतिवादिना तथाभावस्याप्रतिपादितत्वाच्च पराजयोपि नास्त्येव । तस्य प्रतिपन्नापेक्षत्वात् । अत एव प्र[4]तिवादिन्यपि तयोरभावः ॥४॥

सम्प्रति प्रतिवादिनो निग्रहस्थानमधिकृत्याह । अदोषोद्भावनमित्यादि(7b6)। यत्र विषये जिज्ञासिते अजिज्ञासिते[5] पुनर्दोषस्यानुद्भावनेपि नापराध इत्यभिप्रायः । के पुनस्ते साधनस्य दोषा इत्याह । न्यूनत्वं षट्प्रकारमेकैकद्विद्विरूपानुक्तौ (।) स्यान्मतिः सपक्ष[6]विपक्षयोः सदसत्त्वयोर्यौगपद्येनाप्रयोगे कथञ्च प्रकारात् न्यूनतोच्यते (।) यदा सर्व्वोपसंहारेण व्याप्तिव्यतिरेकाभ्यान्तदाक्षेपोपि नास्ति तदेयं व्यवस्थाप्यते ।

---

* मीमांसाशबरभाष्ये १।१।२

पादनं प्रतिवादिनः[7] पराजयाधिकरणं तत्पुनः साधनस्य निर्दोषत्त्वात् ।
सदोषत्त्वेपि प्रतिवादिनोऽज्ञानात्प्रतिपादनासामर्थ्याद्वा । नहि दुष्ट-
साधनाभिधानेपि वादिनः प्रतिवादिनोऽप्रतिपादिते दोषे पराज[8]यव्यव-
स्थापना युक्ता । तयोरेव परस्परसामर्थ्योपघातापेक्षया जयपराजयव्यवस्था-
पनात् । केवलं हेत्वाभासाद् भूतप्रतिपत्तेरभावादप्रतिपादकस्य जयोपि
नास्त्येव । न हि त[9]त्त्वचिन्तायां कश्चिच्छलव्यवहारः । यद्येवं किन्नु
पराजयस्तत्त्वसिद्धिभ्रंशात् । नानिराकरणात् । निराकरणं हि तस्यान्येन
8a पराजयो न सिध्यभावः । प्रतियोग्यपेक्षणात् सि[10]द्ध्यभावस्य ।

---

अ[7]श्चोच्यते तदाप्यप्रदर्शितान्वयव्यतिरेकादिदृष्टान्तदोषो भवति । भवत्व-
यमपरोस्यापराधो न ह्येकदोषालीढान्येव साधनानि भवन्ति त्रयो हेत्वाभासा दृष्टा-
न्ता[8]भासाश्चाष्टादशन्यायविन्दौ (तृतीये परिच्छेदे) सोदाहरणा (:) प्रपञ्चेन
द्रष्टव्याः । तेषामनुद्भावनं पर्यायशब्दद्वयेन व्याचष्टे । तच्चानुद्भावनं त्रिभिः
48b कारणैरित्याह । ततः पुनः [9]साधनस्य निर्दोषत्वादित्यादि ।

ननु च युक्तो निर्दोषे साधने प्रतिवादिनो दोषानुद्भावनान्निग्रहः ।
सदोषे त्वज्ञानासामर्थ्याभ्यामनुद्भावनेपि दोषस्य दुष्टसाधनप्रयो[1]गाद्वादिन एव
पराजयो युक्तो न प्रतिवादिन इति । अत्राह । न हि दुष्टसाधनाभिधानेपीति (7b8) ।
यद्येवं दुष्टेनापि साधनेन वादिना प्रतिवादिनस्तिरस्कृतत्वात् कस्माज्ज[2]यो
न भवति तस्येत्याह । केवलमित्यादि (7 b 9) । यद्येवं किन्न पराजयः । तत्वसिद्धि-
भ्रंशादिति चोद्यं । नानिराकरणादित्याद्युत्तरं । दुर्जनानाम्विप्रतिपत्तिरशोभनो
व्य[3]वहारैः तस्मान्न योगविहितो न्याय्यः कश्चिद्विजगीषुवादो नाम यच्छला-
दिभिः क्रियत इत्यध्याहारः । उक्ते सति न्याये तत्वार्थी चेत् प्रतिवादी प्र[4]तिपद्येत
तमर्थं न्यायोपेतं । अथ स्वपक्षरागस्य वलीयस्त्वादुक्तेपि न्याये न प्रतिपद्येत । तदा
तेन प्रतिवादिना तस्य न्यायस्यार्थस्याप्रतिपत्तावन्य[5]समीपवर्त्यात्मज्ञो जनकायो न
विप्रतिपद्येतेति कृत्वा न्यायानुसरणमेव सतां वाद इति वर्त्तते । तत्वरक्षणार्थमिति-
परः । यथोक्तं तत्वा(ध्य)वसाय[6]संरक्षणार्थञ्जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं
कण्टकशाखावरणवदिति (न्या० सू० ४।२।५०) । नेत्याद्याचार्यः । एवन्तत्वं
सुरक्षितम्भवति । एकान्तेन प्रतिद्वन्द्युन्मूलनादिति भाव(:।) [7]तदभाव इति साधन-
प्रख्यापनसाधनाभासदूषणयोरभावे । अन्यथापीति मिथ्याप्रलापाद्यभावेपि ॥०॥
कथमसौ न दोषः साधनस्येत्याह । तस्य दोषत्वे[8]नाभिमतस्य भावेपि सिद्धेर्वि-

साधनाभावेऽसत्यपि प्रतियोगिनि भावात् । प्रतियोगिनश्च तन्निराकरणेऽसामर्थ्यात् पराजयस्यानुत्पत्तेरपराजयः । तस्मादयमसमर्थसाधनाभिधाय्यपि परेण तथाभावे ऽप्र[1]तिपादितेऽपराजितो वक्तव्यः ।

छलव्यवहारोपि विजिगीषूणां वाद इति चेत् । न । दुर्ज्जनविप्रतिपत्त्यधिकारे सतां शास्त्रप्रवृत्तेः । नहि परानुग्रहप्रवृत्ता मिथ्याप्रलापारम्भात्स्वोत्कर्षपर[2] पंसनादीनसद्व्यवहारानुपदिशंति । न च परविपंसनेन लाभसत्कारश्लोकोपार्ज्जनं सतामाचारः । नापि तथाप्रवृत्तेभ्यः स्वहस्तदानेन प्राणिणा( ? ना )मुपतापनं सत्सम्मतानां शास्त्रकारस[3]भासदां युक्तं । न च न्यायशास्त्राणि सद्भिर्लाभाद्युपार्ज्जनाय प्रणीयन्ते (।) तस्मान्न योगविहितः कश्चिद्विजिगीषुवादो नाम । परानुग्रहप्रवृत्तास्तु सन्तो विप्रतिपन्नं प्रतिपादयन्तो[4] न्यायमनुसरेयुः सत्साधनाभिधानेन भूतदोषोद्भावनेन वा । साक्षिप्रत्यक्षं तस्यैवानुग्रबोधाय तदेव न्यायानुसरणं सतां वादः । उक्तन्याये तत्त्वार्थी चेत्प्रतिपद्ये[5]त । तदप्रतिपत्तावप्यन्यो न प्रतिपद्येतेति । तत्त्वरक्षणार्थं सद्भिरुपहर्त्तव्यमेव छलादि विजिगीषु(भि)रिति चेत् । नखचपेटशस्त्रप्रहारादीपनादिभिरपीति वक्तव्यं । त[6]स्मान्न ज्यायानयं तत्त्वरक्षणोपाय (:) । साधनप्रख्यापनं सतां तत्त्वरक्षणोपायः साधनाभासदूषणञ्च । तदभावे मिथ्याप्रलापादत्र परोपतापविधानेपि तत्त्वाप्रतिष्ठा[7]पनात् । अन्यथापि न्यायोपवर्णने विद्वत्प्रतिष्ठानात् । तस्मात्परानुग्रहाय तत्त्वख्यापनं वादिनो विजयो, भूतदोषदर्शनेन मिथ्याप्रतिपत्तिनिवर्त्तनं प्रतिवादिनः ।

---

धाताभावात् । साधयितुमनिष्टोप्याकाशगुणत्वादिकार्यत्वेनानित्यत्वमात्रसाधने ध्वनौ विवक्षिते सति काणादाः केचिच्चोदयन्ति[9]न्यायानभिज्ञाः । शास्त्रोपगमात् 49a
सर्व्वस्तदिष्टः साध्यः । तत्प्रधाने च हेतुप्रतिज्ञयोर्दोष इति तच्चायुज्यमानं शास्त्राश्रयेप्यस्त्यपगतमात्रस्यैव साध्यत्वात् । अन्यथा गन्धे भूगुणताविपर्ययसाधनादयमेव हेतुरस्यामेव प्रतिज्ञायां विरुद्धः प्राप्नोति (।) तथेदमपरमदोषोद्भावनं । यथाह भारद्वाजो नास्त्यात्मेति प्रतिज्ञापदयोः प[2]रस्परविरोध इति । यस्मादात्मेति वस्त्वभिधीयते नास्तीति तस्य प्रतिषेधः । इदमप्ययुक्तमनादिवासनोद्भूतात्मविकल्पपरिनिष्ठितप्रतिभासभेदस्य श[3]ब्दार्थस्य परेष्टानित्यचित्तत्वादिविशेषणात्म-

अथवा यो न दोषः[8]साधनस्य तद्भावेपि वादिना तदसाधयितु-मिष्टस्यार्थस्य सिद्धेर्विघाताभावात् । तस्योद्भावनं प्रतिवादिनो निग्रहाधिकरणं मिथ्योत्तराभिधानात् । यथा सापि (?[1]) भ्रमनिष्टोपि वादिनो ध[9]र्मः शास्त्रोपगमात्साध्य इति तद्विपर्यासेन न विरोधोद्भावनं । नास्त्यात्मेति तव प्रतिज्ञापदयोर्विरोध इति । प्रतिज्ञादोषोद्भावनं प्रयत्ना-
8b न्तरीयकः शब्दोऽनित्यः प्रयत्नान्तरीय[10]कत्त्वादिति हेतोर्द्धर्मविशेषत्त्वा-
त्प्रतिज्ञार्थैकदेश इत्यसिद्धोद्भावनं, सर्वाणि *साधर्म्यवैधर्म्यसमादीनि*[2] जात्युत्तराणीति । एवमादेर्दोषस्योद्भावनमदोषोद्भावनं तस्य वादिना दोषाभासत्त्वे प्रख्या[1]पिते प्रतिवादी पराजितो वक्तव्यः । पूर्वपक्षे साधनस्य निर्दोषत्त्वात् । दोषवति पुनः साधने न द्वयोरेकस्यापि जयपराजयौ तत्त्वाप्रख्यापनात् । अदोषोद्भावनञ्च । अप्रतिपक्षायाञ्च पक्षसि[2]द्धौ कृतायां जेता भवति तस्माज्जिगीषता स्वपक्षश्च स्थापनीयः परपक्षश्च

---

लक्षणभावोपादानत्वस्य निराचिकीर्षितत्वात् । अत्रैव हि धर्मिणि व्यवस्थिताः सदसत्त्वञ्चिन्तयन्ति सन्त[4](:) किमयमात्मविकल्पप्रतिभास्यर्थो यथाभिमत-भावोपादानो न वेति । न तु पुनरत्रायमेव विकल्पप्रतिभास्येवार्थोऽपह्नूयते तस्यैव बुद्धावुपस्थाप[5]नाय शब्दप्रयोगात् प्रत्यात्मवेद्यत्वाच्च । विकल्पप्रतिबिम्बव्यतिरिक्तं तु बाह्यं स्वलक्षणं नैव शब्दार्थ इति न तस्य विधिर्नापि प्रतिषेधणं[?नं] । अन्यथा

परमा चै[6]कतानत्वे शब्दानामनिबन्धना (।)
न स्यात् प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु ॥ (२३)
अतीताजातयोर्वापि न च स्याद नृतार्थता ।
वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता[7] ॥ (२४)

---

[1]द्पेर्-न गॅोल्-वस् छोस् ब्स्ग्रुब्-पर्-ब्य-व-ञिदु ऽदोद्-प म-यिन्-प यङ् ब्स्तन्-ब्चोस्-खस्-ब्लङ्स-पऽि-फ्यिर् ब्स्ग्रुब्-पर्-ब्य-व यिन्-नो ॥ = यथा साध्यतयाऽनिष्टोपि वादिनो धर्मः शास्त्रोपगमात्साध्यः ।—इति भोट-ग्रंथे ।

[2]न्या० सू० ४।१।१

निराकर्त्तव्यः । निर्दोषे साधनाभिधानेपि वादिनः प्रतिवादिना दोषाभास उद्भाविते दूषणाभावत्त्वख्यापन[3] एव जयपराजयौ नान्यथा ( , ) भावतस्तत्त्वाभिधानेपि प्रतिपक्षनिराकरणेन तत्त्वस्य प्रख्यापनासामर्थ्यात् ( । ) न प्रतिवादिनोप्यत्र भावतो मिथ्याप्रतिपत्तेरिति । इदं न्या[4]य्यं निग्रहस्थानलक्षणमुक्तमस्माभिः ॥

---

स चायम्विकल्पो भावोपादानत्वेन निराचीकीर्षितो देशकालप्रतिनियतिमनपेक्ष्य विकल्पप्रतिबिंबविषयत्वादेव चात्मशब्दस्य न निर्विषयत्वमस्ति । ततश्च यदु[8]क्तं यच्च यत्र प्रतिषिद्धचते तत् तस्मादन्यत्रास्ति । यथा नास्ति नासमानाधिकरणो घटशब्दो न घटाभावं प्रतिपादयितुं शक्नोति । अपि तु देशकालविशेषात् प्रतिषेधाग[9]ति (:) । नास्ति घट इति देशविशेषे प्रतिषेधो गेहे नास्ति इति । कालविशेषे 46b
वा प्रतिषेधः । इदानीं नास्ति । प्राग्नास्ति । ऊर्ध्वं नास्ति । सर्व्वस्यायं प्रतिषेधो नाननुभूतघटसत्व[1]स्य युक्तः । तथा नास्त्यात्मेति किमयन्देशविशेषः प्रतिषिध्यते । उत्तरकालविशेष इति । यदि तावद्देशविशेषप्रतिषेधः । स आत्मनि न युक्तोऽदेशत्वादात्मनः । न च देशविशेषप्रतिषेधादात्मा प्रतिषिद्धो भवति । न चायम्भवताभिप्रायः । शरीरमात्मा न भवतीति चेत् । कस्य वा शरीरमात्मा यं प्रति प्रतिषेधः । शरीरे नास्त्या[3]त्मेत्येवं प्रतिषेध इति चेत् । कस्य शरीरे आत्मा यं प्रति प्रतिषेधः । क्व तर्ह्यात्मा । न क्वचिदात्मा । किमयं नास्त्येव । न नास्ति विशेषप्रतिषेधात् । केयं वाचो युक्ति[4]र्न शरीरे नान्यत्र । न च नास्ति । एषैवेषा वाचो युक्तिः । यद्यथा भूतन्तत्तथा निर्दिश्यत इति न चायमात्मा क्वचिदपीति । तस्मात्तथैव निर्देशः । न च कालविशेषे[5] प्रतिषेधो युक्तः । आत्मनि त्रैकाल्यस्यानभिव्यक्तेरात्मप्रतिषेधञ्च कुर्वाणेनात्मशब्दस्य विषयो वक्तव्यः । न ह्येकं पदं निरर्थकं पश्यामः ॥ अथापि शरी[6]रादिषु आत्मशब्दं प्रतिपद्येथाः । एवमप्यनिवृत्तौ व्याघातः कथमिति । नास्त्यात्मेत्यस्य वाक्यस्य तदानीमयमर्थो भवति शरीरादयो न सन्तीति । एवमादि बह्वसं[7]बद्धं तदपहस्तितम्भवति । प्रतिज्ञार्थैकदेश इत्येतदप्यसत् सामान्यविशेषस्याभावात् । यद्वा न प्रयत्नानन्तरीयकत्वस्य प्रतिज्ञार्थैकदेशता धर्मिणमुपलक्ष्य निवृत्तत्वात्[8] (।) यस्य हि यदुपलक्षकं न तस्य तदेकदेशत्वं यथा न काकस्य गृहैकदेशत्वमिति ॥ 50a

# वादन्यायः

## २. न्यायमतखंडनम्

*अन्यत्तु न युक्तमिति नेष्यते।* यत्रेदं यथोक्तं निग्रहस्थान-लक्षणान्नास्ति तस्य निग्रहस्थानत्त्वमयुक्तमिति नोक्तमस्माभिः।

*प्र[5]तिदृष्टान्तधर्म्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानि* (न्यायसूत्रं ५।२।२) निग्रहस्थानमिति। अत्र *भाष्यकारमतं* दूषयित्वा *वार्तिककारो*[1]

---

अन्यत्तु न युक्तमिति (8b5) यदुक्तमक्षपादेन द्वाविंशतिविधं निग्रहस्थानं। प्रतिज्ञाहानिः। प्रतिज्ञान्तरं। प्रतिज्ञाविरोधः। प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तर-न्निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यून मधिकं पुनरुक्तमननुभाषणमज्ञा-नमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणन्निरनुयोज्यानुयोगोपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि (न्या० सू० ५।२।१)। "तानीमानि द्वाविंशति-विधानि विभज्य वक्ष्यन्ते"[2]। प्रतिदृ[2]ष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः। (न्या०सू०५।२।) तत्र भाष्यकारमतं दूषयित्वा वार्त्तिककारोयं स्थितपक्षमाह। तमेव ब्रूम इति। भाष्यकारमतस्य भारद्वाजेनैव दूषि[3]तत्वादस्माकमर्द्धन्तावदवसितं भारस्येति भावः। तत्रेदम्भाष्यकारस्य मतं। "साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थितः प्रतिदृष्टान्तधर्मं स्वदृष्टां[4]तेनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। निदर्शनमनित्यः शब्द ऐन्द्रियकत्वात् घटवदिति कृते पर आह। दृष्टमैन्द्रियकं सामान्यं नित्यङ्कस्मात्[5] न तथा शब्द इति प्रत्यवस्थित इदमाह यद्यैन्द्रियकं सामान्यं कामं घटोपि नित्योस्त्विति। स खल्वयं साधनस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमना[6]नन्त(र)मेव पक्षञ्जहाति पक्षञ्च जहतः प्रतिज्ञाहानिरित्युच्यते। प्रतिज्ञाश्रयत्वात् पक्षस्येति।"[3] वार्तिककारेण चैवमेतद् दूषितं। [4]"एतत्तु न बुद्ध्या-महे कथमत्र प्रति[7]ज्ञा हीयत इति हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते।

---

[1] उद्योतकर आह न्याय-वार्तिके (पृ० ५५१-५२)।

[2] न्यायवात्स्यायनभाष्ये (५।२।१)। [3] तत्रैव (५।२।२)।

[4] न्यायवार्त्तिके (५।२।२)।

यं स्थितपक्षमाह। तत्रैवं ब्रूमः ( — ) प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वदृष्टान्ते[6]ऽभ्यनुजानाति निगृहीतो वेदितव्यः। तत्र दृष्टश्चासावन्तेच व्यवस्थित इति दृष्टान्तः ( । ) स्वदृष्टान्तः स्वपक्षः, प्रतिदृष्टान्तः प्रतिपक्षः । प्रतिपक्षस्य धर्म्मं स्वपक्षेऽभ्यनुजा[7]नन्पराजितः। यथाऽनित्यः शब्द ऐन्द्रियकत्त्वादिति ब्रुवन् प्रतिपक्षवादिनि सामान्येन प्रत्यवस्थिते आह यदि सामान्यमैन्द्रियकं नित्यं शब्दोद्भावनमस्त्विति। एषा प्रतिज्ञाहानिः प्राक्प्रतिज्ञातस्य[8] शब्दानित्त्यत्त्वस्य योगादिति। अत्रोपगतप्रतियोगात् प्रतिज्ञाहानौ विशेषप्रतिनियमः किंकृतोऽनेन प्रकारेण प्रतिज्ञां त्यजतः प्रतिज्ञाहानिरिति। सम्भवन्ति ह्यन्येनापि प्रकारेण[9] हेतुदोषोद्भावनादिना प्रतिपक्षसाधनाभिधानेन च स्वपक्षपरित्यागः परपक्षोपगमश्च। इदमेव च प्रतिज्ञाहानेः प्रधानं निमित्तं एवं प्रतिपादि-
9a तेन प्रतिज्ञा हात[10]व्या हानौ च पराजय इति।

---

तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते। नित्यताप्रतिपत्तेश्चा[8]सिद्धतादृष्टान्तदोषो भवतीति सोयं दृष्टान्तदोषेण वा हेतुदोषेण वा निग्रहो
50 b न प्रतिज्ञाहानिरिति। दृष्टान्तञ्च जहत् प्रतिज्ञाञ्जहातीति उपचारेण निग्रहस्थानं।[9] न च प्रधानासम्भवे उपचारो लभ्यत इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्य इति।" इदानीम्वार्तिककारमतं स्वयमेवोपन्यस्यति। प्रतिदृष्टान्तस्येत्यादिना (8b6) कः पुनर[1]त्र दृष्टान्तोऽभिमतो यदि तावत् यत्र[1] "लौकिकपरीक्षकानो [? णां] बुद्धि-साम्यं स दृष्टान्त (न्या० सू० १।१।२५) इति पारिभाषिकस्तदा भाष्यकारमतादविषेशस्तत्र च प्रतिविहितं। अथान्यः स न ग[2]म्यत इत्याह। तत्र दृष्टश्चासौ पञ्चावयवेन साधनेनान्ते च निगमनस्य व्यवस्थित इति दृष्टान्तः पक्षः। ततः स्वशब्देन सह विशेषणसमासः। तद्विपरीतः प्रतिदृष्टान्त[3] (:)। यथाऽनित्यः शब्दः ऐन्द्रियकत्वादिति ब्रुवन्वादी प्रतिपक्षवादिनि सामान्यादिकमैन्द्रियकं नित्यं च। ततोविपक्षेपि वृत्तेर्व्यभिचार्ययं हेतुरित्येवं "सामा[4]न्येन प्रत्यवस्थिते सत्याह यद्येवं शब्दोप्येवमस्त्विति एषा प्रतिज्ञाहानिर्नाम निग्रहस्थानं"। कस्मात्। प्राग्प्रतिज्ञातस्य शब्दानित्यत्वस्य त्यागात्। प्रतिज्ञाश[5]ब्देन धर्मिविशेषणभूतो धर्म उच्यते समुदायावयवत्वात्। एतत् प्रतिक्षिपति। अत्र भारद्वाजमते उपगतायाः प्रतिज्ञायास्त्यागात् कारणात्। येयं प्रति[6]ज्ञाहानिर्व्यवस्थापिता तस्यां विशेषनियमः किङ्कृतः। कोसावनेन प्रकारेण स्वपक्षे प्रतिपक्षधर्मानुज्ञास्वरूपेण प्रतिज्ञाहानिरिति। स्यात् मतमयमेव प्रति[7]ज्ञाहानिः प्रकारो नान्योस्ति ततो नियमार्थमुच्यत इति। सम्भवति ह्यन्येनापीति। अथ

इदं पुनरसम्बद्धमेव सामान्यं नित्त्यमैन्द्रियकमित्युक्त शब्दोप्येवमस्त्विति क : स्वस्थात्मा स्वयमैन्द्रियकत्त्वादनित्त्यः शब्दो घटवदिति ब्रुवन् सामान्येनोपदर्शनमात्रेण[1] नित्यं शब्दं प्रतिपद्यते । सामान्यस्य(।)पि नित्यस्यैन्द्रियकत्वेप्यनित्ये घटे दर्शनात्संशयितः स्यात् । जात्या त्र( ? प्र )तिपद्येतापीति चेत् । तथापि किं सामान्यस्योपदर्शनेन । ए[2]वमेव नित्यः शब्द इति वक्तव्यं । जडस्य प्रतिपत्तौ विचाराभावात् । न च नित्यसामान्योपदर्शनेन तद्धर्मं शब्दे प्रतिपद्यमानेन प्रतिपक्षधर्म्मोऽभ्यनुज्ञातो भवति । अनित्यः शब्द इति च वदतो[3] नित्यशब्द इत्याभासः प्रतिपक्षः स्यान्न नित्यं सामान्यमिति (।) तस्मादैन्द्रियकत्त्वस्य नित्यानित्यपक्षवृत्तेर्व्यभिचारादसाधनाङ्गस्योपादानान्निग्रहार्हो न, प्रतिपक्षधर्म्मानुज्ञया[4] [१]ऽनेन प्रकारेण प्रतिज्ञाहानेः ॥ त् ॥

---

मतिः प्रधानमेतन्निमित्तं तस्यास्ततोस्मिन् प्रदर्शितेऽन्योपि प्रकाशित एव भवती[8]ति । तदत्राप्याह । इदमेव च हेतुदोषोद्भावनादिकङ्कारणं यस्मादेवं हेतुदोषोद्भावनादिना प्रतिपादितेन प्रतिवादिना प्रतिज्ञा हातव्या सम्यग्दूषणाभिधानात् ।[9]यच्चेद- 51a
मभ्यधायि सामान्यं नित्यमैन्द्रिचकमित्युक्ते शब्दोप्येवमस्त्वित्यत्र प्रतिविधत्ते । इदम्पुनरसम्बद्धमेव (91a) । यस्मात् कः स्वस्थात्मा सामान्योपदर्शनमात्रेण सामान्यमस्ति[1] न चैन्द्रियकन्नित्यञ्चेत्येतदविचार्य शब्दं नित्यं प्रतिपद्येत । एतावत्तु भवेत् सामन्यस्यापि नित्यस्यैन्द्रियकत्वे तस्य ऐन्द्रियकत्वस्यानित्येपि घटे दर्शनात् संशयितः स्यात्[2] (।) अपि च प्रतिदृष्टान्तधर्मानुज्ञैवात्र न युक्तेत्याह । न च तद्धर्मं तस्य सामान्यस्य धर्मन्नित्यत्वं यतोऽनित्यः शब्द इति वदता कस्यचिन्नित्यः शब्द इत्ययमञ्जशो [?से][3]ति प्रत्यासन्नः प्रतिपक्षः स्यान्न सामान्यन्तस्य धर्म्यन्तरत्वात् । तथा ह्येकाधिकरणयोरेव नित्यत्वानित्यत्वयोर्विरोधो न नानाधिकरणयोः । आञ्जस[4]ग्रहणमयमपि विरुद्धधर्माधिकरणत्वात् प्रतिपक्षो न त्वतिनिकटो यथा नित्यः शब्द इत्ययमिति परिदीपनार्थं । नानेन प्रकारेण प्रतिज्ञाहाने[5]निग्रहार्हं इति वर्तते । केनानेनेत्याह । प्रतिपक्षधर्मानुज्ञया । अथवा अनेनेत्यसाधनाङ्गवचनेन । यथोक्तमिदमेव प्रधानं निमित्तमिति ॥

---

[१]"यदाह कीर्तिः—तस्मादैन्द्रियकत्वस्य नित्यानित्यपक्षवृत्तेर्व्यभिचारादसाधनांगस्योपादानान्निग्रहो न प्रतिपक्षधर्मस्याभ्यनुज्ञानादिति"—इति न्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्रः (पृ० ७००-१) ।

प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरं ( न्या० ५।२।३ )। प्रतिज्ञातोर्थोऽनित्त्यः शब्द ऐन्द्रियकत्त्वादित्येव, तस्य हेतुव्यभिचारो[5]पदर्शनेन प्रतिषेधे कृते धर्म्मभेदविकल्पात्सामान्यघटयोः सर्वगतत्वासर्वगतत्वधर्म्मविकल्पेन प्रतिज्ञान्तरङ्करोति। यथा घटोऽसर्वगतोऽनित्य एवं शब्दोप्यसर्व[6]गतोऽनित्य इत्येतत्प्रतिज्ञान्तरं नाम निग्रहस्थानं साधनसामर्थ्येप्यपरिज्ञानात्। सहि पूर्वस्या अनित्त्यः शब्द इति प्रतिज्ञायाः साधनात्तदा यामसर्वगतः शब्द इति[7] प्रतिज्ञामाह। तद्दर्शनाय तदर्थनिर्देश इत्याह। तदर्थः पूर्वोक्तसाध्यसिध्यर्थ उत्तरप्रतिज्ञानिर्देशस्तदर्थनिर्देशः। न च प्रतिज्ञा प्रतिज्ञान्तरसाधने समर्थेति निग्रहस्थानं ॥

अत्रापि नै[8]वं ब्रुवता प्रतिज्ञान्तरं पूर्वप्रतिज्ञासाधनायोक्तं भवति। किन्तर्हि विशेषणं। ऐन्द्रियकत्त्वस्य हेतोः सामान्ये वृत्त्या व्यभिचार उद्भाविते ऽसर्वगतत्त्वे सत्यैन्द्रियकत्त्वस्य हेतोर्विशेषणो[9]पादाने व्यभिचारं परिहरति न पुनः प्रतिज्ञान्तरमाह। असर्वगतस्य शब्दे सिद्धत्वात्। प्रतिज्ञायाश्च साध्यनिर्देशलक्षणत्वात्।

यदप्युक्तं पूर्वप्रतिज्ञासाधनायोत्तरां प्रतिज्ञामाहेति[10] तदप्ययुक्तं।

---

प्रतिज्ञा[6]तार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरमिति(9a5) (न्या० सू० ५।२।३) द्वितीयलक्षणसूत्रं (।) निग्रहस्थानमिति सर्व्वत्रानुवर्तते। अस्यार्थः प्रतिषेधो विपक्षे हेतुसद्भाव[7]कथनं तस्मिन्सति सपक्षविपक्षयोर्द्धर्मभेदेन करणभूतेन पूर्व्वप्रतिज्ञार्थप्रतिपत्यर्थं प्रतिज्ञान्तरङ्करोति। यथा घटोऽसर्वगत एवं शब्दोप्यसर्व्वगतो घटवदेवा[8]नित्यः शब्द इति शेषः सुज्ञानः। इदं निराकरोति अत्रापी (9a8) त्यादिना। अबिद्धकर्णस्तु भाष्यटीकायामिदमाशङ्क्यपरिजिहीर्षति (।) ननु चासर्व्वगतत्वे सतीति। हे[9]तुविशेषणमुक्तं। सविशेषणश्च हेतुर्विपक्षे नास्तीति न प्रतिज्ञान्तरं निग्रहस्थानं। नहि तदेवमसर्व्वगतः शब्द इति प्रतिज्ञान्तरोपादानात्। हेतुविशेषणोपादाने हेत्वन्तरं निग्रहस्थानमिति। एतच्चातिस्थूलं। स ह्येवं पक्षधर्ममेव विदग्धबुद्धिर्विशिनष्टि न तु प्रतिज्ञान्तरमुपादत्ते सिद्धत्वात्। यदपि हेतुविशेषणोपादाने हेत्व[2]न्तरन्निग्रहस्थानमित्यभ्यधायि तदप्यतिपेलवं। यस्मादेवं तदेव नामास्तु प्रतिज्ञान्तरत्वसम्बद्धं। उदाहरणसाधर्म्यादिश्चेति। उदाहरणसाधर्म्यात्साध्यसाधनं हेतु (न्या०सू० १।१।३४)रित्येतस्य प्रतिज्ञालक्षणस्य साध्यनिर्देशः प्रतिज्ञेत्येतस्याभावात्। 
5Ib उपाददता चानेन प्रतिज्ञां प्रतिज्ञासाधनाय प्रतिज्ञामात्रेण युक्तिरहिते[4] न सिद्धिरिष्टा

नहि प्रतिज्ञा प्रतिज्ञासाधनायोच्यमाना प्रतिज्ञान्तरं भवति, किन्तर्हि हेत्वादेरन्यतमः, साध्यसाधनायोपादानात् । साधननिर्देशः स स्यान्न साध्यनिर्देशः । उदाहरणसाधर्म्या[1]देशश्च हेतुलक्षणस्यासर्वगतत्वे भावात्प्रतिज्ञालक्षणस्य चाभावात् । हेतुत्वमसर्वगतत्वे प्रयुक्तं न प्रतिज्ञान्तरं ।[1] अत्यन्तासम्बद्धश्चेदं प्रतिज्ञां प्रतिज्ञासाधनायाहेति । यो हि प्राक् प्रतिज्ञामु[2]क्त्वा हेतूदाहरणादिकं वक्तुं जानाति स किञ्चिदनुक्रमं साधनस्य जानात्येव हि, जानन्कथमपिकनान्तः [ ? विकलान्तः ] करणः प्रतिज्ञामेव प्रतिज्ञासाधनायोपाददीत । उपाददता चानेन प्रतिज्ञामात्रेण सिद्धिरि[3]ष्टा भवति । ततश्च न प्रागपि हेतुं ब्रूयात् । एवं प्रकाराणामसम्बद्धानां परिसङ्ख्यातुमशक्यत्वात् । लक्षणनियमोप्य(स)म्बद्ध एव प्रतिज्ञान्तराभिधाने प्रतिज्ञान्तरं नाम निग्रहस्था[4]नमिति । असम्बद्धाभिधानं निग्रहस्थानमिति । एवं प्रकाराणामेकमेव लक्षणं वाच्यं स्यात् । न चैवं विधः कश्चिद्विवादेषु दृष्टपूर्वो व्यवहारो येन तदर्थं यत्नः क्रियते । न च[5] बालप्रलापानुद्दिश्य शास्त्रं प्रवर्तते, प्रवृत्तौ च का निष्ठा, तेषामनिष्ठानात् । दृश्यते च विदुषामपि नातिनिरूपणादसिद्धाभिधानमिति । व्यवहारदर्शनात्तादृशं पराजया[6]धिकरणं व्यवस्थाप्यते । तस्मादिहापि यदि निवृत्ताका(ङ्क्षे) वादिनि परो नैकान्तिकतामुद्भावयेदसाधनाङ्गस्यानै- 9b

---

भवति । ततश्च प्रागपि प्रथमप्रतिज्ञानन्तरमपि हेतुमैन्द्रियकत्वन्न ब्रूयात् । तस्मादेवं प्रकाराणाम्बालप्रलापानां प्रतिज्ञासाधनाय प्रति[5]ज्ञान्तरमुच्यत इत्येवं रूपाणां परिसङ्ख्यातुमस[? श]क्यत्वात् लक्षणनियमोप्यसम्बद्ध एव । कोसौ । प्रतिज्ञान्तराभिधाने प्रतिज्ञान्तरं नाम निग्रहस्थानमिति[6] ।

ननु नायमीदृशो लक्षणनियमः प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देश इत्येवं कृतत्वात् । नास्ति दोषस्तस्यैव पर्य्यायान्तरेण कथनात् । अथोच्यते य[7]था विद्वांसो न प्रतिज्ञां प्रतिज्ञासाधानयाहुस्तथा साध्यसिध्यर्थमसिद्धविरुद्धानैकान्तिकादीनपि प्रयुञ्जते ततश्चासाधनाङ्गवचनमित्यादि त्वयापि न वाच्यं[8] भवेदतः प्राह (।) विदुषामपी(9b6)ति । अनुद्दिश्याप्रमाणकं शास्त्रोपगममिति मामकीने तन्त्रे

---

[1] "अत्यन्तासम्बद्धमेतद् यत्प्रतिज्ञा प्रतिज्ञासाधनायेति० स कथं चिदनुक्रमं० जानात्येव जानन् कथमविकलान्तःकरणः० साधनायोपाददीत"—इति (न्या० वा० ता० पृ० ७०३) ।

कान्तिकस्याभिधानान्निग्रहस्थानं वादिनः। एवं यदि प्र[7]तिवादी सत्सामान्यमैन्द्रियकं नित्त्यञ्च प्रमाणेन प्रतिपादयितुं शक्नुयात्। अनुद्दिश्याप्रमाणकं शास्त्रोपगमं प्रमाणेनैषामर्थानामप्रतिपादनेन भूतदोषोद्भावनमेत(त्) न क[8]श्चित्पराजयोऽ(यः, अ)भ्युपगममात्रेण वस्तुसिद्धेरभावात्। प्रतिवादिना दोषस्याप्रतिपादितत्त्वात्। प्रमाणैरसमर्थितसाधनाभिधानात्तु जेतापि न भवतीति। अनित्याकांक्षे पुनर्वादिनि[9] न कश्चिद्दोषो, विशेषणाभिधानेन हेतोः समर्थनोपक्रमात् ॥७॥

*प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः* ( न्या० ५।२।४ )। यथा (—)
10a "गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा रूपादिभ्योऽर्थान्त[10]रस्यानुपलब्धेरिति हेतुः। सोयं प्रतिज्ञाहेत्वोविरोधः।"[1] एतेनैव प्रतिज्ञाविरोधोप्युक्तो यत्र प्रतिज्ञावचनेन विरुध्यते। यथा श्रव [? श्रम] णा गर्भिणी ( , ) नास्त्यात्मेति वा। हेतुविरोधोपि यत्र प्र[1]तिज्ञया हेतुर्विरुध्यते। यथा सर्वं

---

52a सामान्यं यथा भूतं सिद्धमित्येव न प्रदर्श्यंत(इ)त्यर्थः। तथाहि व्युत्थित[9]चेतसो न परसमयव्यवस्थोपरोधमाद्रियन्ते तत्वदर्शनाध्यवसायशूराः शू[? सू]रयः। अप्रमाणकम्वचनं प्रमाणोपेतस्याभ्युपगमस्य विद्वद्भिरलङ्घनीयत्वात्। एतच्च स्या[1]त् प्रमाणैरसर्मथितसाधनाभिधानाद्वाद्यपि जेता न भवति प्रतिपक्षस्य निराकरणात् ॥४॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो (न्या० सू० ५।२।४) (9b10) नाम निग्रहस्थानं। "गुणव्यति[2]रिक्तं द्रव्यमिति प्रतिज्ञा। रूपादिभ्योर्थान्तरस्यानुपलब्धेरिति हेतुः। सोयम्प्रतिज्ञाहेत्वोर्विरोधः। यदि गुणव्यतिरिक्तं द्रव्यं रूपादिभ्येऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते। अथ रूपादिभ्योर्थान्तरस्यानुपलब्धिर्गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते।" एतेनैव प्रतिज्ञाहेत्वोर्विरोधेन प्रतिज्ञाविरोधः स्ववचनेन व्याख्यात(।)[4]सूत्रकारेणास्योपलक्षणार्थमुक्तमेतत्। श्रमणा(10a1)प्रतिविरतपुरुषसम्भोगा गर्भश्च नान्तरेण पुरुषसम्भोगमिति स्ववचनव्याहतिः। हेतुविरोध एतेन[5] चोक्त इति वर्तते। सर्व्वं पृथग् नाना नास्त्येको भाव इति यावत्। समूहे भाव सब्द[? शब्द]प्रयोगात् समूहवाचकघटादिभावशब्दवाच्यत्वादित्यर्थः। यस्मात् समूह इ[6]ति ब्रुवाणेन एकोभ्युपगतो भवति। एकसमुच्चयो हि समूह इति। तथा हि गवादिद्रव्याणि समुदितानि प्रतिपद्यमानेन समूहोभ्युपेयः। स चायं समूहयन्ति

---

[1] न्यायभाष्ये (पृ० २५९)।

पृथक् समूहे भावशब्दप्रयोगादिति। एतेन प्रतिज्ञया दृष्टान्तविरोधोपि व्याख्यातः। हेतोश्च दृष्टान्तादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेतो-र्वक्तव्य[2]:। यः परपक्षं स्वसिद्धेन गोत्वादिना व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यं (।) स्वपक्षानपेक्षञ्च यश्च स्वपक्षानपेक्षं हेतुं प्रयुंक्ते अनित्यः शब्द ऐन्द्रियकत्वादिति तस्य स्वसिद्धस्य गोत्वादेरनित्यविरोधाद्विरुद्धः[3]।

---

द्र[7]व्याण्येतानि गवादिभावेन व्यवस्थितानीति न व्यवतिष्ठते। भेदोप्यल्पतरतमत्वेन
यत्तत्र परमाल्पं यदभेद्यं ततो निवर्त्तते यतश्चायं भेदो निवर्त्तते तदेकं। अथ म[8]न्यसे
यं तमभेद्यं परमाणुं मन्यसे सोपि रूपादीनां समुदाय इति। एतस्मिन्वै दर्शने ये
रूपादयः समुदितास्ते परमाणुरिति परमाणौ रूपं स कस्य समुदाय इ[9]ति वक्तव्यं। 52b
एवं शेषेषु गुणेषु। अथ न तं समुदायम्प्रतिपद्यसे। अष्टौ द्रव्याणि समुदितानि
परमाणुरिति शास्त्रं व्याहतं। कामेऽष्टद्रव्यकोऽशब्दः परमाणुरिति (अभिधर्मकोशे
२।२२)। तस्मा[1]दनुपपत्तावनेकोपपत्तिरित्यतिमौढ्यं। असिद्धश्चायं हेतुः।
यस्मादनेकविधलक्षणैर्गन्धादिभिर्गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भाव
उपपद्यते। अतः[2]शब्दादेकार्थाधिगतौ शेषोनुसक्तो[?षक्तो]र्थो गम्यत इति।

ननु चायमपि प्रतिज्ञाहेत्वोर्विरोध इति प्रथमादस्याविशेषः। नैवमुभयाश्रित
त्वात् विरोधस्य। विवक्षातो[3]ऽन्यतरनिर्देश इति भारद्वाजेनैवोक्तत्त्वात्। प्रति-
ज्ञाया दृष्टान्तविरोधो यथा व्यक्तमेकप्रकृतिकं परिमितत्वात् शरावादिवदिति
शरावादिर्दृष्टान्त ए[4]कप्रकृतित्वं बाधते। दृष्टान्तभूतायाः प्रकृतेः प्रकृत्यंतरत्वात्।
एकप्रकृतित्वे वा शरावादिर्दृष्टान्तोऽयुक्तः। हेतोश्च दृष्टन्तादिभिर्विरोधो यथा
गुण[5]व्यतिरिक्तं द्रव्यमर्थान्तरत्वेनानुपलभ्यमानत्वात्। घटादिवदिति। घटादी-
नाम्भेदेन ग्रहणाद्धेतुं बाधते दृष्टान्तः। आदिग्रहणेन हेतोरुपनयनिगम(न)भ्यां
विरोधो गृह्यते। अनयोरुदाहरणमनित्यः शब्दः कृतकत्वात्। यत्कृतकन्तदनित्यं
यथाकाशन्तथा च कृतकः शब्द इत्युपनयेन हेतोर्विरोधः। तथा ह्युदा[7]हरणा
पेक्षस्तथेत्युयुपसंहारो न तथेति चेति (न्या० सू० १।१।३८) साध्यस्योपनय उक्तः।
इह च विपरीतमुदाहरणमित्येतदपेक्षोपनयेन हेतोर्विरोधः। ईदृशे च प्रयोगे
त[8]स्मादनित्य इत्युपसंहारे निगमनेन। प्रमाणविरोधश्च प्रतिज्ञाहेतोर्यथाऽनुष्णो-
ग्निर्द्रव्यत्वाज्जलवदिति प्रत्यक्षम्बाधते। परपक्ष (10 a 2) इत्यादि। एतच्च
यच्च स्वपक्षा[9]नपेक्षञ्चेत्यादि (10 a 3)। एतदप्युभयम्प्रतिज्ञाहेतोर्विरोध 53a
इत्यनेनैव सङ्गृहीतत्वात् पृथग् निग्रहस्थानत्वेन नैव वक्तव्यमिति दर्शयति।[1]
परपक्ष इत्यत्र परेणप्र माणे कृते कणादोऽनैकान्तिकमुद्भावयति। स्वपक्षानपेक्षञ्चेत्यत्र

इति परपक्षेष्वसिद्धेन गोत्वादिनाऽनैकान्तिकचोदनाविरुद्धः। उभयपक्ष-सम्प्रतिपन्नस्त्वनैकान्तिकः। यदुभयपक्षं प्रतिपन्नं वस्तु तेनानैकान्तिक-चोदनेति।[1]

अत्रापि प्रतिज्ञार्थ[3]: साधनवाक्ये प्रयोगप्रतिषेधात्। तदाश्रयस्त-त्कृतो वा हेतुदृष्टान्तयोर्न विरोध इति न प्रतिज्ञाविरोधो नाम किञ्चिन्नि-ग्रहस्थानं।

स्यादेतदसत्यपि प्रतिज्ञाप्रयोगे गम्य[5]मानोपि प्रतिज्ञाहेत्वोर्विरोधो भवति। यथा रूपादिभ्योऽर्थान्तरस्यानुपलब्धिस्तद्गुणव्यतिरिक्तं नोपलभ्यते च रूपादिभ्योऽर्थान्तरं द्रव्यमित्युक्तेपि गम्यत एव साध्यसाध[6]नयोर्वि-रोधः कथन्ततोऽर्थान्तरस्यानुपलब्धिस्तद्व्यतिरेकश्चेति। सत्यं स्यादयं विरोधो यदि हेतुः साध्यधर्मविपर्ययं साधयेत्। यदि ह्युपलब्धिलक्षणप्राप्तत्वेनो-पगतस्य[7] सतो द्रव्यरूपादिप्रतिभासविवेकेन स्वप्रतिभासानुपलब्धिस्तस्य-तद्व्यतिरेके नास्तीतीष्टव्यतिरेकविपर्ययसाधनाद्विरुद्धो हेतुरस्माभिरुक्त एवेति। भवत्येवेदं निग्रहाधिक[8]रणं यद्येवंविधः प्रतिज्ञाहेतोर्विरोध इष्टः। अथ पुनरस्योपलब्धिलक्षणप्राप्तिर्लुप्यते तदा न कश्चित्प्रतिज्ञाहेतोर्विरोधः व्यतिरिक्तानामपि भावानां कुतश्चिद्विप्रकर्षाणां तद्व्यतिरेके[9]णानुपलब्धा-वपि व्यतिरेकस्य भावात्।

यदुक्तं (—) *स्ववचनप्रतिज्ञायाः स्ववचनविरोधे प्रतिज्ञाविरोध* इति। तत्रेदमेव निग्रहाधिकरणमसाधनाङ्गभूतायाः प्रतिज्ञायाः साधन-

---

तु वैशेषिक एव प्रमाणङ्करोति। परस्तं व्यभिचारयतीति भेदः। यदि तर्हि गो[2]त्वादिना व्यभिचारे कृते विरुद्धमुत्तरं तथा सत्यनैकान्तिको निर्विषय इत्याह। उभयेत्या(१०a४)दि। वादिप्रतिवादिप्रसिद्ध उभयपक्षसंप्रतिपन्नः सोऽनैकान्तिकस्त-द्विषयत्वादुप[3]चारेण तथा च वृत्तिस्तेनानैकान्तिकचोदनेति। अत्रापी(१०a३)त्यादि। नैतदपि प्रतिक्षिपति तदाश्रयः सा प्रतिज्ञाऽश्रयो यस्य विरोधस्य स तथा। तत्कृतो वेति त[4]या प्रतिज्ञया कृतः। परिशिष्टमतिस्फुटं। व्यतिरिक्तानामपि कुतश्चित् पर्व-तादेः सकाशाद्विप्रकर्षिणाम्पिसा [? शा]चादीनां तत्रेदमेव निग्रहाधिकरणं। [5]यदुत प्रतिज्ञायाः प्रयोगः। न विरोधः प्रतिज्ञायाः निग्रहाधिकरणमिति वर्तते। किमिति। तदधिकरणत्वात्। प्रतिज्ञाश्रयत्वात् इत्यर्थः। यदि पु[6]नस्तदधिकरणो न भवेद्

---

[1] न्यायवार्तिके (पृ० ५५३-४) स्वल्पभेदेन।

वाक्ये[10] प्रयोगो न विरोधस्तदधिकरणत्वात्। यदि प्रतिज्ञानपेक्षो 10b
विरोधः स्यात् स्यात्पराजयाश्रयः। प्रतिज्ञाधिकरणत्वे पुनस्तत्प्रयोगकृत एव पराजयोऽस्य प्रस्तावोपसंहारावज्ञानत्वात्। व्यर्थं विरोधो[1]द्भावनं पराजितपराजयाभावाद्धम्मीकृतनालवत्। ये तु केचिद्विचारप्रसङ्गेष्वेकत्र साध्ये बहवो हेतव उच्यन्ते तेषां विकल्पेन तत्साध्यसाधनाय वृत्तेः सामर्थ्यमन्यथा द्वितीयस्य वैयर्थ्या[2]त्। यदि हि तत्राप्येकप्रयोगमन्तरेणापरस्य प्रयोगो न सम्भवेत् न तदा द्वितीयस्य कश्चित्साधनार्थः, प्रतीतप्रतिपादनाभावात्। तस्मान्न प्रतिज्ञायाः स्ववचनविरोधो नाम किञ्चिन्निग्रहस्थानं।[3]

न च नास्त्यात्मेत्यत्र कश्चित्प्रतिज्ञाविरोधः। नास्त्यात्मशब्दार्थस्य

---

भवेन्निग्रहाधिकरणमित्याह। यदी(10b1)त्यादि। प्रस्तावस्य वादस्योपसंहारः परिसमाप्तिस्तस्यावसानन्निमित्तं प्रतिज्ञाप्रयोगः। तन्मात्रेणै[7]वासाधनाङ्गाभिधानात् वादिनोभङ्गात्। क्वचित्प्रस्तावोपसंहारावसरत्वादिति पठ्यते। तत्रापि वादपरिसमाप्तेः प्रतिज्ञापदप्रयोगे सत्यवसरोऽधिकार इत्यर्थः। अथ बुद्धिर्यथा भवद्भिः कस्यचिदर्थस्य क्षणिकत्वादिकमेकमेव साध्यं बहुभिः सत्वोत्पत्तिमत्वप्रत्ययभेदभेदित्वादिभिर्हेतुभिः प्रतिपाद्यते तथैक[9]मपि दूष्यम्परोपन्यस्तं साधनवाक्यं प्रतिज्ञोपादानद्वारेण तद्विरोधद्वारेणान्यथा वा दूष्यते। तथा च नायन्दोषः पराजितपराजयाभावादिति। तदत्राह। ये तु हेतवः[1]उच्यन्ते(10b2)तेषाम्विकल्पेन पूर्व्वहेत्वनपेक्षया। एवं वैतत्। अथवान्यथा साधयामीत्येतत् साध्यसाधनाय वृत्तेः कारणात्सामर्थ्यमस्ति(।) किं पुनः कारणं न समुच्चये नैव प्रयोग[2]इत्याह। अन्यथा यदि(10b3)समुच्चये नैवापरहेत्वन्तरप्रयोगोभीष्टस्तदा द्वितीयस्य वैयर्थ्यात् विकल्पेन सामान्यमिति वर्तते। वैयर्थ्यमेव प्रतिपादयति। यदि हि तत्रा[3]प्येकप्रयोगमन्तरेणापरस्य प्रयोगो न सम्भवेत्। उभयप्रतिषेधेन विध्यवसायात्। यद्येकस्य प्रयोगेऽपरस्य समुच्चयेन प्रयोगः सम्भवेदि[4]त्यर्थः। तदा न द्वितीयस्य कश्चित् साधानार्थो प्रतीतप्रतिपादनाभावात्। प्रथमहेतुप्रतिपादित एवार्थे व्यापृतत्वान्निष्पादितक्रिये दारुणि प्रवृत्त[5]स्यैव दात्रादेर्न कश्चित्साधकतमत्वार्थ इति यावत्। ननु च साधनवद्विकल्पेनैव दूषणमपि भविष्यति। एवं मन्यते। नैवं परोभ्युपगन्तुमर्हति। ए[6]वं हि तेन स्वयमेव प्रतिज्ञाया असाधनाङ्गत्वम्प्रतिपन्नम्भवेत्। ततश्चैतद् व्याहन्यते। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा (न्या० सू० १।१।३२) इति। अन्यैरेव हेतुभिरित्यव[7]यविद्रव्यनिषेधकैः पूर्व्वोक्तप्रकारैः कुम्भादिशब्दस्यैकघटाद्यवयविद्रव्यलक्षणविशेषानभिधानमनेकस्य चार्थस्य रूपादेर्यत्सामान्यमेकार्थ-

भावोपादानत्वनिषेधात्। शब्दार्थनिषेधे हि विरोधः स्यात्। न च स्वलक्षणं शब्दार्थ इति। यः पुनः प्रतिज्ञा[4]या बाधनाद्धेतुविरोध उक्तः। यथा सर्वं पृथक्समूहे भावशब्दप्रयोगादिति। नात्र प्रतिज्ञायाः प्रयोगो नापि हेतोर्येन विरोधः स्यात्। किन्तर्हि प्रतिपादितार्थोपदर्शनेनोप[5]संहारवचनमेतस्मात्।

---

क्रियासामर्थ्यात्म[8]कन्तदभिधानञ्च प्रतिपाद्य सर्व्वस्य शब्दार्थस्य रूपादेरेकार्थ-क्रियासमर्थस्य नानार्थरूपतया करणभूतया। एकश्चासौ वस्तुविशेषस्वभावश्चा-
54a वयविद्रव्यरूपस्त[9]स्य भाव एकवस्तुविशेषस्वभावता तस्या अभावमुपदर्शयन्नास्त्येको भाव इत्यभिदध्याद् बौद्धो न तु रूपाणीन्द्रियार्थान् प्रतिक्षिपन्। स्यात् मती रूपाद्यव्यतिरेकात् सामर्थ्यमप्यनेकं तत्कथन्तदेकमित्युच्यते कथं वा तस्य शब्दार्थत्वं। नहि स्वलक्षणं शब्दार्थं इत्युच्यते। नानाभूतमपि सामर्थ्यभिन्नवत्स्वव्यतिरेकादेकार्थ-क्रियाकारितयैकप्रत्यवम[2]र्षहेतुत्वात् परम्परयैकमित्याख्यायते। यथोक्तम्।

एकप्रत्यवमर्षस्य हेतुत्वाद्धीरभेदिनी (।)
एकधा हेतुभावेन व्यक्तीनामप्यभिन्नतेति ॥(२५)

पुरुषाध्यवसायानिरोधे[3]न शब्दार्थत्वं तस्य व्यवस्थाप्यते। पुरुषोह्यनादिमिथ्या-भ्यासवासनापरिपाकप्रभावादन्तर्मात्राविपरिवर्तिनमाकारं बाह्येष्वेवारोप्य दृश्य-विकल्पयो[4]रेकत्वम्प्रतिपन्नः परमार्थतस्तु निर्विषया एव ध्वनयः। व्यक्तीनाम्विज्ञाना-कारस्य चार्थान्तरानुगमाभावेनाभिलापागोचरत्वात्। यथाध्यवसायञ्चाका[5]रस्य सत्वात्। यथोक्तं सूत्रे॥

येन येन हि नाम्ना वै यो यो धर्मोभिलप्यते।
न स सम्विद्यते तत्र धर्माणां सा हि धर्मतेति ॥(२६)

तदयमत्र समदायार्थो रूपादी[6]नाङ्घटस्य च यथा क्रममनेकत्वमेकत्वञ्च वहुवचनैक-वचनाभिधयत्वात्(।)तद्यथा नक्षत्राणि शशीत्येवमादिभिरनुमानाभासैः परेण घटादिशब्दस्य विषयो[7]योयमेकार्थोऽवयव्यभिधानोभ्युपगतः स एव प्रतिक्षिप्यते। नतु रूपरसादयः परमाणुस्वभावास्तथा हि तेषाम्प्रत्येकमेकैकात्मकत्वमिष्टमेव। केवला[8]-स्तदातिसफलबीजवन्न समुदायमासादयन्तीति नियतसहोत्पादत्वपरिदीपनायोक्तं॥

कामेष्टद्रव्यकोऽशब्दः परमाणुरतीन्द्रियः (।)
54b कायेन्द्रियो नवद्रव्यो[9] दशद्रव्योऽपरेन्द्रिय इति। (२७,अभिधर्मकोशे २।२२)

यथा तु परमाणूनामैन्द्रियकत्वमनित्यत्वञ्च तद्विस्तरेणोक्तमन्यत्रास्माभिः। यत्पुनरेतद्बहुवचनैकवचनाभिधेयत्वादिति तद्व्यभिचा[1]रि। तथाहि यदैकस्यामपि

अन्यैरेव हेतुभिः शब्दस्यैकविशेषानभिधानमनेकार्थसामान्याभिधानञ्च । प्रतिपाद्य सर्वस्य शब्दार्थस्य नानार्थरूपतयैकवस्तुविशेषस्व[6]भावताऽभावमुपदर्शयन् शब्दार्थमधिकृत्य सर्वं पृथगिति ब्रूयात् । एतेन तद्विरोधः प्रत्युक्तः दृष्टान्तोपदूषणं चैतदनित्यः शब्दः कृतकानित्यत्वादिति । यथा कश्चिदर्थे विप्र[7]तिपत्तौ प्रसिद्धमनेकार्थसामान्ये शब्दप्रयोगमुपदर्श्य प्रति-

---

योषिति जले सिकताद्रव्ये वा दारा आपः सिकता इति व्यवहारः । तदा किन्तत्र बाहुल्यं येनैवं भवति शक्तिभेद इति चेत् । सर्व्वत्रोच्छि[2]न्नमिदानीमेकवचनमेकशक्तेरभावात् । वस्त्वभेदादन्यत्रैकवचनमिति चेत् । इहाप्यस्तु । तदयन्निर्वस्तुको नियमः क्रियमाणः स्वातन्त्र्यमिच्छायाः शब्दप्रयो[3]गे ख्यापयति । एतेन तदपि प्रत्युक्तं यदाह कुमारिलः (।)

तत्र व्यक्तौ च जातौ च दारादिश्चेत्प्रयुज्यते ।
व्यक्तेरवयवानाम्वा संख्यामादाय वर्तत इति ।। (२८)

षणगरीति च कथम्बहुष्वेकवचनं । नहि नगराण्येव किञ्चित् कुतस्तेषां समाहारः । प्रासादपुरुषादीनां विजातीयानामनारम्भात् कुतस्तत्सम[5]दायो द्रव्यं असंयोगाच्च नापि संयोगः । प्रासादादीनां परस्परसंयोगात् । प्रासादस्य स्वयं संयोगात्मकस्य निर्गुणतयापरेणासंयोगाच्च । तत[6] एव च संख्याभावः । तत्संयोगपुरुषविशिष्टा सत्ता नगरमिति चेत् । किमस्यानिरतिस[? श]याया विशेषणं सत्तायाश्चैकत्वात् नगरबहुत्वेपि नगराणीति बहु[7]वचनं स्यात् (।) द्वयस्य परस्परसहिततेति चेत् । अनुपकारकयोः कः सहायीभावः । पुरुषसंयोगसत्तानां च वहुत्वान्नगरमिति कथमेकवचनं । तथा भू[8]तानां क्वचिदभिन्ना शक्तिः सा निमित्तमिति चेन्न । शक्तेर्वस्तुरूपाव्यतिरेकात् । व्यतिरेके चानुपकार्यस्य पारतन्त्र्यायोगात् । उपकारे वा शक्त्युपकारिण्या अपि श[9]क्तेर्व्यतिरेक इत्यवस्थितेरप्रतिपत्तिः । तदव्यतिरेके अन्यासा- 55a
मपि प्रसंग इति यत्किञ्चिदेतत् । प्रकारान्तरमप्याह । दृष्टोपदर्शनश्चैतदिति । किं पुनः पञ्चम्यन्त[1]निर्देशेपि दृष्टान्तो भवतीत्याह । कृतकानित्यत्वादि(10b7)ति यथा येनोक्तं ।

हेतोः साध्यान्वयो यत्राभावेभावश्चकथ्यते ।
पञ्चम्या तत्र दृष्टान्तो हेतुस्तूपनयाऽ[2]त्मक (२९) इति ।।

क्वचिदर्थे घटादिद्रव्ये विप्रतिपत्तौ सत्यां रूपादिव्यतिरिक्तमस्ति नास्तीत्यनेकस्यार्थस्य परस्परव्यावृत्तस्य नगरादेः सामान्यं षणगरीत्यादि[3] यद् बुध्यारोपितं

पादितविप्रतिपत्तिस्थानः सामान्येनोपसंहरति । सर्वं पृथगिति । यदि दृष्टान्तप्रयोगः किमृजुनैव तत्प्रयोगक्रमेण न प्रयु[8]क्तो विप्रतिपत्तिविषयश्च किन्न दर्शित इति चेत् । न ( । ) समासनिर्देशात् । एवमपि प्रयो( ग )-दर्शनादसाधनवाक्यत्वाच्च । अत एव न प्रतिज्ञया हतोर्बाधनं । न चैक-
11a मेव किञ्चिन्नास्तीति ब्रुवाणः क[9]श्चित्तत्समुच्चयरूपमेकञ्च समूह-मिच्छति येन विरोधः स्यात् ।

---

तत्र प्रसिद्धं शब्दप्रयोगमादर्श्य परस्परव्यावृत्तानामेकार्थाननुगतानां बुद्धिसमाकृते समूहे भावशब्दप्रयोगादित्यनेन पश्चा[4]दुपनयेन पक्षधर्मोपसंहारमागूर्य प्रतिपादित-विप्रतिपत्तिस्थानः सन्सामान्येनोपसंहरति । सर्व्वं पृथगि(10b8)ति । प्रतिपादितं प्रतिपत्तिस्थानम[5]नेनेति विग्रहः । एतदुक्तम्भवति । कपालादिव्यतिरेकेना [? णा]-वयव्यस्ति नास्तीति विवादे सत्ययं त्रिलक्षणहेतुसूचनपरो दृष्टान्त उपन्यस्तो न हेतुः[6] । प्रयोगस्त्वत्रैवं क्रियते । ये परस्परव्यावृत्ता न ते व्यतिरिक्तैकावयविद्रव्यानु-गतमूर्त्तयः । तद्यथा षण्णगर्यादयः । तथा च परस्परव्यावृत्ताः कपालादय इ[7]ति ॥

ननु च यद्ययं दृष्टान्तप्रयोगस्तत्किमृजुनैव तत्प्रयोगक्रमेण न प्रयुक्तो यथा यत्सत् तत्क्षणिकं यथा घट इत्यादौ । किम्पञ्चम्यन्तनिर्देशेन । विप्रतिपत्ति[8]-विषयश्च किन्न दर्शितः कपालादेरवयविप्रतिषेधविशिष्टः । यथान्यत्रानित्यः शब्दः
55b कृतकानित्यत्वादिति । चकारात् स्पष्टश्च कस्मात् हेतुः साध्यानुगतो न प्रद[9]र्शितः । तथाह्यत्र परस्परव्यावृत्तानामेकार्थाननुगतानां बुद्ध्या समाहिते समूहभावशब्द-प्रयोगादित्यभ्यूह्य वाक्यपरिसमाप्तिः क्रियते । अत्रोत्तरं न समासनिर्दे[1]शात् संक्षेपाभिधानादित्यर्थः । एवमपि प्रयोगदर्शनात् कृतकानित्यत्वादित्यादौ । असाधनं वाक्यत्वाच्च साधनप्रयोगोत्प्रेक्षासूचकं वाक्यमेतत् । नत्विदं साधन-वा[2]क्यमित्यर्थः । अत एवेति दृष्टान्तवाक्यत्वादेवेति । यश्चायं हेतुस्तन्तुपटरूपे भिन्नकारणे विशेषवत्वाद्रूपस्पर्शवदिति ॥ अयमपि तन्तुपटयोर्भेदासिद्धौ तदा[3]-श्रितस्यापि गुणस्य विभागासिद्धेरसिद्धाश्रय इति नालमिष्टसिद्धये । तथा हि सूक्ष्मस्-थूलद्रव्यसमवायो विशेषवत्वं भिन्नकालोत्पन्नद्रव्यसंवाया[4]वेति व्याचक्षते ।

परे । ननु विचित्राभिसन्धयः योक्तारः । तत्र ये केचिद्धेत्वभिप्रायेनैव [? णैव] वाचः प्रयुञ्जते तान्प्रत्यस्माभिः प्रतिज्ञया हेतोर्बाधनमु[5]च्यते न तु ये दृष्टान्ताभि-मानिन इत्यत्राह (।) नचे(10b9)त्यादि । भगवत्तथागतमतावलम्बिनामुपर्ययमु-पक्षिप्तो विरोधो भवद्भिराक्षपादैर्न च नः स्वप्न[6]व्ये तादृशोस्तीति पिण्डार्थः । स्यात् मतमस्त्येव योगाचारो यः (—)

योपि युगपत्पङ्क्तेन योगादित्यादिना परमाणोर्भेदमाह। न तस्याप्येकः समुच्चयरूपः साधयितुमिष्टः किन्तर्ह्यभाव एव ए[1]कानेकप्रतिषेधात्। अतः सोपि न समूहस्तस्येष्टो न तत्र शब्द इति न विरोधः। न विरुद्धोयं पूर्वकात्प्रतिज्ञाहेतुविरोधाद् भिद्यते येन पृथगुच्येत। तत्र हेतुप्रतिज्ञयोर्बाधनमिह प्रतिज्ञया[2] हेतोरित्यस्ति भेद इति चेत्। अर्थविरोधे हि हेतुप्रतिज्ञयोर्बाध्यबाधकभावः स्यात्। सर्वार्थविरोधो द्विषु इति द्वयमपि परस्परं बाधकमेकार्थसन्निधावपरार्थासम्भवात्। तत्र हेतुप्रति[3]ज्ञयोः पृथग्बाधोदाहरणयोर्न कश्चिदर्थभेदः। अपि चायं विरुद्धो

---

पङ्क्तेन युगपद्योगात् परमाणोः पतङ्गतां।
षण्णां समानदेशत्वात् पिण्डः स्यादणुमात्रक (:।।३०)

इ[7]त्यादिना परमाणोरेकत्वमनभ्युपगच्छन्नपि पिण्डं समूहापरपर्यायमिच्छतीत्येतदुच्यते। योपी(11a1)त्यादि किन्तर्ह्यभाव एवाणोरनेन प्रकारेण साधयितु[8]मिष्टः। कथं। एकानेकप्रतिषेधात्। पङ्कायोगादिना तावदेकत्वं प्रतिसि [? षि]द्धं। तत्समुदायरूपमनेकत्वमपि तदभावादेव न विद्यते। यथोक्तन् ननु[1] (।)

तस्य तस्यै[9]कता नास्ति यो यो भावः परीक्ष्यते। 56a
न सन्ति तेनानेकेपि येनैकोपि न विद्यत (३१)इति ।।

ननु[1] पङ्कयोगादिना कथमेकत्वमपोदितं। यावता तत्र तस्य सावयवत्वमापादितं ।। त एव चावयवास्तस्याल्पीयांसः परमाणवो वि[2]भागपर्यवसानलक्षणत्वात् परमाणूनां। अथ तेषामप्यङ्गानामनेनैव विधानेन सावयवत्वमापाद्यते। तथा सति तत्राप्येतदेवोत्तरमित्यनेनैव प्रकारे[3]ण न शक्यते परमाणोरेकत्वनिषेधं कर्त्तुं। विभागस्य विभज्यमाण[? न]तन्त्रत्वात्। कथञ्चानभ्युपगताणुस्तस्य पङ्कयोगादिकमभ्युपगच्छतीति त[4]दसत्वप्रतिपादने सर्वे हेतवः स्वत एवाश्रयासिद्धा इति। एतच्च नैवं यस्मात्समर्था वादिनोऽपगतावयवविभागमासादितापकर्षयन्तं भाव[5]मणुरित्याचक्षते तस्य तेन पङ्कायोगादिनैकत्वमपाक्रियते। ते च यद्येवं निराकृताः सन्तो यथोपगतस्य सावयवत्वं प्रतिपद्यन्ते तदा स्व[6]प्रतिज्ञायाश्च्यवेरन्। न हि अनङ्गीकृतसावयवत्वास्तथा प्रत्यवस्थानमर्हन्ति। त एवावयवाः सन्तु परमाणव इति। तैरेव च तल्लक्षणव्यवस्थापनीयं योगाचा[7]रेण च निषेध्यमिति निगृह्यन्ते। अत एव नानवस्था। प्रसङ्गसाधनत्वाच्चासिद्धतादोषोपि नास्तीत्यलमेतेन। अथोच्यते न वयं भवन्तं प्रतीदं ब्रूमो यस्तु कश्चिदयौ[8]तपादो वाद्येवं

वा सति हेतुप्रयोगे व्यधिकरणत्वादसिद्ध इत्यसिद्धता हेतोर्निग्रह-
स्थानं स खलूच्यमान एवातद्धर्म[4]तया प्रतीतो वक्तुः पराजयमानयति।
पराजिते तस्मिंस्तदर्थविरोधचिन्तया न किञ्चित्। अपि च सर्वत्रायं
प्रतिज्ञाहेतो[?त्वो]र्विरोधः।सम्भवंत्वमी दोषजातिमभिपतति विरुद्ध[5]ताम-

---

प्राह तम्प्रतीति। तच्चासत्सर्व्वं पृथग्भावलक्षणपृथग्त्वात् नानेकलक्षणे-
56b नैकभावनिष्पत्तेरित्यत्र प्रस्तावे भारद्वाजेनास्मान्प्रत्येव कामेष्टद्रव्य[9]क इत्यादिना
सिद्धान्तमस्माकीनमुपक्षिप्याप्यभिधानात्। तथाप्यभ्युपगम्य दोषान्तरमाह। न
चायम्पूर्वकाद् गुणव्यतिरिक्तमित्यादिपदसूचितात् परस्परार्थमा[1] धाय भिद्यते।
हेतुप्रतिज्ञयोः सम्बन्धिन्योः बाधयोरुदाहरणोपेतयोः पृथग्बाधोदाहरणयोर्न कश्चि-
दर्थभेदः शब्दभेदस्तु केवलः। तथाविधस्य च पृथगुदा[2]हरणेऽतिप्रसङ्गोऽकृतकः
शब्दः कृतकत्वादित्याद्यप्युदाहर्त्तव्यम्भवेत। सह पृथग्वेति क्वचित्पाठः। तत्राय-
मर्थः सह यौगपद्येन यथा प्रथमे पृथक् प्रत्येकं। य[3]थेह अथवा विरोधचिन्ताप्यत्रा-
युक्तेत्याह (।) अपिचे(11a5)त्यादि। सर्व्वं पृथक् समूहे भावशब्दप्रयो(गा)
दित्ययं हेतुः। सर्व्वस्य धर्मिणो धर्म एव न भवति शब्दधर्म[4]त्वादित्यसिद्धः।
तथा च व्यधिकरणत्वादसिद्धतैव दोषो गुडो मधुरः काकस्य कार्ण्यादिति यथा।
तत्र न विरोधो भिन्नाधिकरणत्वाद्धेतुप्रति[5]ज्ञार्थयोः। स्याद् बुद्धिः समूहवाचक-
शब्दवाच्यत्वादित्येवं भाविविक्तेन भाष्यटीकायां प्रयोगाद् व्यधिकरणत्वं नास्ति।
एवं मन्यते न तावदयमु[6]द्योतकरेणैवं प्रयुक्तस्य वायमस्माभिर्दोषोभिधातुमारब्धो
येपि सम्प्रत्यन्यथा प्रयुञ्जते तेषामपि यद्ययं दोषो न भवति। भवतु अनन्तरोक्तस्तु
दोषो वक्ष्य[7]माणश्च ब्रह्मणाऽपि न शक्यते परिहर्तुमिति। प्रतिज्ञाहेत्वोर्विरोधस्य च
निग्रहस्थानान्तरत्वमङ्गीकृत्य मयेदमभ्यधायि। न त्वस्य तद्युक्तं। हेत्वाभासा-
श्च निग्रह[8]स्थानानी (न्या० सू० ५।२।२४) त्यनेनैव सङ्गृहीतत्वादित्येतद्विभणि-
57a षुराह। अपिचे(11a5)त्यादि। द्वाववयवौ यस्या दोषजातेर्दो[9]षप्रकारस्य सा द्वयी।
कामित्याह। विरुद्धतामसिद्धताञ्च। कथम्पुनर्विरुद्धतेत्याह। विरुद्धतेत्यादि। अयमत्र
संक्षेपार्थः। प्रतिज्ञाहेत्वोर्यत्र प्रयोगे विरोधश्चोद्यते तत्रा[1]वश्यं सिद्धेन धर्मिणा भाव्यं।
सिद्ध च तस्मिन्धर्मणि[?धर्मिणि] हेतोर्वा सत्वम्भवेत् साध्यधर्मस्य। द्वयोर्वा। तत्र न
तावत् द्वयोरपि सत्वं प[2]रस्परविरोधित्वेन शीतोष्णयोरिव एकाधिकरणत्वाभावात्।
अन्यथा सहैकत्रावस्थानाद्रसरूपवदविरोध एव भवेदिति प्रतिज्ञाहेत्वोर्विरोधो दूरतर
एव[3] प्रसज्यते। तद्वक्ष्यति। विरुद्धयोः स्वभावयोरेकत्रासम्भवान्न चान्यथा विरोध
इति। अथ हेतोस्तत्र सत्वं। एवमपि यत्र हेतुस्तत्र न साध्यधर्मस्तद्विप[4]र्ययस्तु विद्यत

सिद्धताञ्चेति। विरुद्धता सिद्धे हेतोर्द्धर्म्मिणि भावे साध्यधर्म्मविपर्यय
एव भावेन प्रतिज्ञाविरोधात्। असिद्धता पुनर्द्धर्म्मिणि प्रतिज्ञातार्थासिद्धौ
विरुद्धयोः स्वभावयोरेकत्रास[6]म्भवात् । न चान्यथा विरोधोऽसिद्धे
धर्म्मस्वभावेऽभिहितयोर्हेतुप्रतिज्ञातार्थयोर्विरोधाद्विरोधसम्भव इति चेत्।
अप्रमाणयोगे तूभयोर्द्धर्म्मिणि संशयः । तथा सति हेतो[7]र्द्धर्म्मिणि
भावसंशयेऽसिद्धतैव हेतुदोष इत्यसिद्धविरुद्धाभ्यामन्यो न प्रतिज्ञया
विरोधो नाम पराजयहेतुः। असिद्धविरुद्धे च हेत्वाभासवचनादेवोक्त
इति न पृथक् प्रतिज्ञाविरो[8] धो वक्तव्य इति।

उभयाश्रितत्वाद्विरोधस्य विवक्षातोऽन्यतरनिर्द्देश इति चेत्। स्यादेतत्
प्रतिज्ञाहेतो[? त्वो]र्विरोध इति प्रतिज्ञाहेतू आश्रित्योभयाश्रयो भवति। तत्र
यदा प्रतिज्ञाविरो[9]धो विवक्षितस्तदा प्रतिज्ञाविरोध इत्युच्यते। यदा प्रति-
11b ज्ञाया हेतोर्वा विरोधस्तदा विरुद्धो हेतुरिति। अतः प्रतिज्ञाविरोधो हेतु-
विरोधो वेत्यदोषः। तत्र हेतोरुदाहरणन्नित्यः शब्द उत्प[1]त्तिधर्म्मकत्त्वादिति,
प्रतिज्ञाविरोधस्य नास्त्यात्मेति। प्रतिज्ञाहेत्वोः परस्परविरुद्धोदाहरणं गुण-
व्यतिरिक्तमित्यादि। प्रतिज्ञया हेतुविरोधोदाहरणं नास्त्येको भाव इत्या-
दिकमिति। न (।) सर्वहे[2]त्वपेक्षस्य विरोधहेत्वाभासानतिक्रमात्। यथोक्तं

---

इति व्यक्तमस्य विरुद्धत्वं। नित्यः शब्दः कृतकत्वादिवत्। तदाह (।) विरुद्धता
सिद्धेर्हेत्वोर्धर्मिणि भाव (11a6)इति। यदा पुनस्तस्मिन्धर्मिणि प्रमा[5]णान्तरेण
साध्यधर्मस्य सत्वं निश्चितं तदा तत्र हेतोरवृत्तिर्विरोधिना क्रोडीकृतत्त्वात्।
अतश्चासिद्धत्वं हेतोः। कृतकः शब्दोऽकार्यत्वादिति यथा। तज्जा[6] ते असिद्धता
पुनर्द्धर्मिणीत्यादि । अथमन्यसे। प्रमाणेन सिद्ध एव गुणव्यतिरिक्ते द्रव्यादौ
धर्मिणि प्रतिज्ञाहेतोर्विरोधो व्यवस्थाप्यते ततो नायं दोष इत्य[7]त इदमासङ्कते
[?शङ्कते] असिद्ध(11b8) इत्यादिना । एवमपि यदि नाम धर्म्यभावेन
पक्षधर्मस्यासम्भवात् विरुद्धत्वं परिहृतं। असिद्धत्वं पुनस्तदवस्थमेवेति मनस्या[8]-
धायाह। प्रमाणयोगे तूभयोर्वादिप्रतिवादिनोर्धर्मिणि हेतोर्वृ त्तिसंशयः । प्रमाण
निवृत्तावप्यर्थाभावासिद्धेः । अतश्चासिद्धतैव सन्दिग्धाश्रयत्वात्। इह नि[9]कुञ्जे 57b
मयूरः केकायितत्त्वादित्यादिवत् । तु शब्दः प्रतिपादकप्रमाणायोगे धर्मिणः
सन्दिग्धाश्रयताहेतोर्धर्मिबाधकप्रमाणवृत्तौ स्फुटमेवाश्रयासिद्धतत्वं।सर्व्वगत आ[1]त्मनि
साध्ये सर्वत्रोपलभ्यमाण[?न]गुणत्ववदित्यस्य समुच्चयार्थः । तथा ह्यसिद्धेः
धर्मिस्वभाव इत्यत्र प्रतिपादकप्रमाणावृत्तेरसिद्धो धर्मी विवक्षितः स्यात्।

ग्राक्। अनपेक्षे च केवले स्वतः प्रतिविरोधे विवक्षिते प्रतिज्ञाहेत्वोर्विरोध इति हेतुग्रहणमसम्बद्धं। न चोत्पत्तिधर्म्मकत्वान्नित्यमित्य[3]त्रापि हेतुविरोधो युक्तः। प्रतिज्ञया हि हेतोर्बाधने हेतुविरोधः। इह तु हेतुना प्रतिज्ञा बाध्यत इति प्रतिज्ञाविरोधो युक्तः। उभयाश्रयेपि विरोधे बाध्यमानविवक्षया तद्विरोध[4]व्यवस्थापनात्। यदप्युक्तं। एतेन प्रतिज्ञया दृष्टान्तविरोधादयोपि वक्तव्या भण्डालेख्यन्यायेनेति[1]। तत्रापि पक्षीकृतधर्म्मविपर्ययवति

---

बाधक[2]प्रमाणवृत्तेर्वा। पूर्वस्मिन्पक्षे कण्ठेनैवोक्तो दोष उत्तरत्र शब्देन समुच्चितः। अत्रौद्योतकरमुत्तरमाशङ्कते। उभयाश्रयत्वा(11a9)दित्यादिना। गतार्थत्वात् सुज्ञानं[3] सर्व्वमेतत्। न सर्व्वत्रेत्यादिना निराकरोति। यथोक्तं प्राग् न द्वयीं दोषजातिमित्यत्र। अथ प्रतिज्ञामात्रभाव्येव हेत्वनपेक्षः प्रतिज्ञाविरोधो व्यवस्था[4]प्यते यथा नास्त्यात्मा श्रमणा गर्भिणीत्यत्रेत्यत आह (।) अनपेक्षे च हेतुग्रहणमसम्बद्धं (11b3)। अनुपकारकत्वात्। यदपीदं हेतुविरोधस्योदाहर[5]णं दत्तं नित्यः शब्द इत्यादिना तत्प्रतिज्ञाविरोधस्य हेतुनायुक्तमिति कथनायाह। न चेदि(11b3)त्यादि। स्यात् मतमुभयाश्रयत्वाद्विरोधस्यैवमपि न हेतुत[6] एवेत्यत उच्यते उभयाश्रयेपी(11b4)त्यादि। एवमुपदर्शितान्युदाहरणानि प्रक्षिप्यातिदिष्टदूषणायाह। यच्चोक्तमेतेन प्रतिज्ञायाः दृष्टान्तविरोधादयोपि[7] वक्तव्या भण्डालेख्यन्यायेने(11b5)ति। इति शब्दो वक्तव्य इत्यत्र प्रतिपत्तव्योऽन्यथापरेणोत्तरस्याप्रयुक्तत्वात् दुःश्लिष्टो भवेत। भण्डग्रहणन्नित्यपुरुषोपलक्षणार्थं। यथा हि भण्डा प्राकृतान् विस्मापयन्तश्चित्रलक्षणोपेतकपिशालभञ्जिकादिप्रतिच्छन्दकमालिख्य विचित्रशिल्पकलाकौशलसादि[? शालि]नोऽतिदि[8]शंत्येवं प्रका-
58a
राण्यप्यस्मत्कौशलनिर्मितान्येकतालमात्रेण हस्त्यादिरूपकस्थानानि प्रतिपत्तव्यानीति तथा जातीयकमेतदुद्योतकरस्य। तथा ह्येतदेव भाव उप[1]दर्शितहेतुविरोधादिकं हेत्वाभासव्यतिरिक्तलक्षणोपेतं। तदतिदिष्टे पुनः कैव चिन्ता। तामेव चातिदिष्टस्य दृष्टान्तविरोधादेर्हेत्वाभासव्यतिरिक्त[2]लक्षणापेततामभिधातुमुपक्रमते। तत्रापी(11b5)त्यादिना। यत्र प्रतिज्ञायाः दृष्टान्तविरोधस्तत्रापि पक्षीकृतधर्मविपर्ययवति दृष्टान्ते सति विरोधः स्यात् प्र[3]तिज्ञायाः दृष्टान्तेनेति शेषः। पक्षीकृतश्चा-

---

[1] "एतेन प्रतिज्ञया दृष्टान्ताविरोधोऽपि वक्तव्यः"—(न्या० वा० ५५३-४); "न चैवं भण्डालेख्यन्यायः एकदेशेनाव्यापकेन समुदायसंग्रहे स हि भवति।"—(न्या० वा० ता० ७०३)।

दृष्टान्ते विरोधः स्यात्, विरुद्धे च दृष्टान्ते यदि पक्षधर्म्मस्य वृत्तिरनन्यसा[5]धारणा प्रसाध्यते विरुद्धस्तदा हेत्वाभासः । साधारणायामप्रसाधिते वा तद्वृत्तिनियमेऽनैकान्तिकः । अवृत्तौ वा साधारणः ।

विरुद्धदृष्टान्तवृत्तौ विपर्ययवृत्तौ च हेतोर्न कश्चिद्धे[6]त्ति दोषो दृष्टान्तविरोधश्च प्रतिज्ञया इति चेत् । न ( । ) तदपि संशयहेतुत्वात् । निवृत्तेर्दृष्टान्तविरोधो हि प्रतिज्ञायाः । साधर्म्ये दोषो न वैधर्म्येऽभिमतत्वात् ।

---

सौ धर्मश्च तस्य विपर्ययः स विद्यते यस्मिन्निति विग्रहः । दृष्टान्त इति च साधर्म्यदृष्टान्तो । अभिप्रेतः । यस्मा[4]द्वैधर्म्यदृष्टान्तः साध्यधर्मविपर्ययवानेव तत्र को विरोधः । तत्रोदाहरणं । नित्यः शब्दो घटवदिति । विरुद्धे च दृष्टान्ते सति यदि पक्षधर्मस्य वृत्ति[5]रनन्यसाधारणा प्रसाध्यते प्रमाणेन विरुद्धस्तदा हेत्वाभासः । नान्यसाधारणेत्यनन्यसाधारणा । अन्यशब्देन पक्षीकृतधर्मविपर्ययवतः[6] पृथग्भूतः पक्षीकृतधर्मवानभिप्रेतः पक्षीकृतधर्मविपर्ययवत्येववर्तते इत्येवं यदि साध्यत इत्यर्थः । यथानयोरेव साध्यदृष्टान्तयोः कार्यत्वादि[7]ति तद्विपक्षीकृतधर्मबहिर्व्योमादौ न वर्तते तद्विपरीते पुनर्घटे वर्तत इति । साधारणायाम्वृत्तौ साधितायां सपक्षविपक्षयोरिति शेषः । अनैकान्तिकः[8] साधारणाख्यः । यथानयोरेव साध्योदाहरणयोः प्रमेयत्वादिति । अप्रसाधिते चातद्वृत्तिनियमे तयोः सपक्षविपक्षयोर्वृत्तिनियमे सपक्ष एव वर्त्तते वि[9]पक्ष 58b
एवेति अनैकान्तिक एव सन्दिग्धान्वयः सन्दिग्धव्यतिरेको वा । यथा सर्व्वविद्वीतरागो वा विवक्षितः पुरुषो न वा तथा वक्तृत्वाद्रथ्यानरवदिति । तयोरेव सपक्ष[1]विपक्षयोरवृत्तौ वा सत्यामसाधारणः । नित्यः शब्दः श्रावणत्वादिति यथा । परः प्राह विरुद्धदृष्टान्तावृत्तौ हेतोर्विपर्ययवृत्तौ च सत्यान्न कश्चिद्धेतुदोषः[2] तद्यथाऽनित्यः शब्दः प्रत्ययभेदभेदित्वात् नभोवदिति साधर्म्येण । वैधर्म्येण च घटवदिति । अत्र नासिद्धत्वं ध( ि)र्मणि हेतोः सद्भावात् । नाप्यनैकान्तिकत्वमुभ[3]यत्रावृत्तेः । प्रतिबन्धसद्भावाच्च । न च विरुद्धत्वं सपक्षविपक्षयोर्वैपरीत्येन वृत्यभावात् । दृष्टान्तेन तु विरोधः प्रतिज्ञायाः इत्ययं हेतुदोषानति[4]क्रान्तो विषयः प्रतिज्ञायाः दृष्टान्तेन च विरोधस्येति । इदमपनुदति । न । तदापि संशयहेतुत्वानतिवृत्तेः । यस्माद् दृष्टान्ते न प्रतिज्ञाया विरोधः सा[5]धर्म्ये दृष्टान्ते दोषो न वैधर्म्ये । कस्मादभिमतत्वाद् विरोधस्य । पक्षीकृतधर्मविपर्ययवानेव हि वैधर्म्यदृष्टान्त उच्यत इत्यभिप्रायः । यदि ना[6]मैवं तथापि कथं हेत्वाभासानतिवृत्तिरित्याह साधर्म्यदृष्टान्ते च विपरीतधर्मवति नभसि नाऽव्यभिचारधर्मता शक्या दर्शयितुं । तदर्थश्च दृष्टान्तः प्रदर्शते ॥[7] यदाह

साधर्म्यदृष्टान्ते च विपरी[7]तधर्म्मवति वस्तुतः साध्याव्यभिचारेपि हेतोर्नाव्यभिचारधर्म्मता शक्या दर्शयितुमिति। नाप्रदर्शिताविनाभाव-सम्बन्धाद्धेतोर्निश्चयः तन्न प्रतिज्ञया दृष्टान्तविरोधो हेत्वाभासानतिवर्त्त[8]-ते। उभयथापि दोषोस्त्विति चेत्। न (।) न हेतुदोषस्य प्राक् प्रसङ्गो न पराजितस्य दोषान्तरानपेक्षणात्। विशेषणं साधनावयवानुक्रम-
12a नियमा वादिन उदाहरणसाधर्म्म्यं हेतु[9] लक्षणं विरुद्धे दृष्टान्ते न सम्भव-तीति प्राक्प्रयुक्तस्य हेतोर्दोषेण पराजय इति नोत्तरदृष्टान्तापेक्षया विरोध-

---

त्रिरूपो हेतुरित्युक्तं पक्षधर्मे च संस्थितः।
रूढे रूपद्वयं शेषं दृष्टान्तेन प्रदर्श्यत इति।(३२)

ननु च कथमशक्या यावता प्रत्ययभेदभेदित्वमनित्यत्वाव्यभि[8]चार्येव तत्वत इत्यत आह। वस्तुतः साध्याव्यभिचारेपी (11b7) ति। विद्यमानोप्यव्यभिचारः
59a प्रमाणेनाप्रतिपादितत्वादसत्कल्प इति भावः। तदेतन्नाप्रदर्शिताऽवि[9]नाभावसम्बद्धा-द्धेतोः साध्यनिश्चयः। तत्तस्मान्न प्रतिज्ञाया दृष्टान्तविरोधोपि हेत्वाभासानतिवर्तते। अस्यापि तदानीं संदिग्धविपक्षव्यावृत्तिकत्वादित्याकूरितं[1]। न केवलहेतुविरोध इत्यपि शब्दः परमतमास[?श]ङ्कते। उभयथापि हेतुद्वारेण दृष्टान्तद्वारेण च। न हेतुद्वारेण प्राग्दृष्टान्तदोषात् प्रसङ्गेन पराजितस्य वादि[2]नो दोषान्तरस्य दृष्टान्त-विरोधस्य वाच्यस्य वानपेक्षणात् पराजितपराजयाभावादित्याकूतं। विशेषेण साध-नावयवानुक्रमवादिनो नैयायिकस्य स हि[3] प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामानु-पूर्वी प्रतिपन्नः। कः पुनः तस्यातिशय इत्याह। उदाहरणसाधर्म्यमि (11b9)-त्यादि। अङ्गीकृत्य चेदमवादि[4]न तु दृष्टान्तविरोधो हेत्वाभासरूपासंस्पर्श्यस्ति। यथोक्तमनन्तरमिति। एतेन विकल्पतो दोषविधानं प्रत्युक्तं। एवन्तावद्व्यवस्थित-मेतद्यथा प्र[5]तिज्ञाया दृष्टान्तविरोधो हेत्वाभासान्नातिवर्तत इति। यत्पुनरुदाहृत-मविद्धकरणेन भाष्यटीकायां व्यक्तमेकप्रकृतिकं परिमितत्वाच्छरावादि[6]वदिति। तत्रापि विरुद्धो हेतुः परिमितत्त्वस्य हेतोः सपक्षेऽभावे वा वृत्तेः। विपक्षे चानेकप्रकृति-के शरावादौ वृत्तेः। मृदः प्रतिक्षणं प्रत्यवयवञ्च भिद्य[7]मानत्वात्। संप्रति हेतोरपि दृष्टान्तेन विरोधो हेत्वाभासान्तर्गत इति कथयति। हेतोरपि दृष्टान्तविरोधे सत्यसा(धा)रणत्वमुभयत्रावृत्तेः। विरुद्धत्वम्वा। कदा[8] विरुद्धत्वमित्याह। वैधर्म्ये यदि स्यादप्यत्रोदाहरणमुक्तं तेनैव गुणव्यतिरिक्तं द्रव्यमर्थान्तरत्वेनानुपलभ्यमा-
59b नत्वाद् घटवदिति अत्रापि दृश्यत्वे सतीति[9] हेतुविशेषणे विरुद्धः सपक्षे अवर्तमान-त्वात्। विपक्षे च रूपादीनां स्वरूपे वर्तमानत्वात्। विशेषणानुपादाने तु व्यभिचारो-

श्चिन्तामर्हति । हेतोरपि दृष्टान्तविरोधेऽसा(धा)र(ण)त्वंविरुद्धत्वं वा वैधर्म्यं यदि वृ[1]त्तिः स्यात्। प्रमाणविरोधे तु हेतोर्यथा न दहनोऽग्निः शैत्यादित्यादि ह्यसिद्धो हेत्वाभासः। प्रतिज्ञायाः प्रमाणविरोधः स्ववचनविरोधेन व्याख्यात इति। सर्व एते साधनविरोधे हे[2]त्वाभासेष्वेवान्तर्भवन्तीति हेत्वाभासवचनेनैवोक्ताः।

यत्तु विरुद्धमुत्तरं परपक्षे स्वासिद्धेन गोत्वादिनाऽनैकान्तिकचोदनेति। तदसम्बद्धमेव। यदि हि स्वसिद्धेन गोत्वादिना प[3]रस्य व्यभिचारसिद्धिमाका(ङ्क्षे)त तस्य तत् स्वपक्षविरुद्धं नाभिमतमिति विरोधो युज्येत। स हि स्वयं

---

र्थान्तरत्त्वेनानुपलब्धानामपि पि[1]शाचादीनां परस्परव्यतिरेकित्वात्। न चात्र घटवदिति दृष्टान्तो युक्तस्तस्यैव द्रव्यान्तरत्वेन पक्षीकृतत्वात्। तस्य रूपादिभ्यो भेदेन ग्रहणं पूर्व्वमेव प्रतिसि[?षि]द्धं[2] ग्रहणे चासिद्धो हेत्वाभास इत्यस्मन्मतमेव स्थितं। अथ हेतोः प्रमाणविरोधे को हेत्वाभास इत्याह। असिद्धोऽग्नेः शैत्यस्याविद्यमानत्वात्। यत्पुनरत्रो[3]दाहरणमन्यदनुष्णोऽग्निर्द्रव्यत्वाज्जलवदिति तदयुक्तं। नहि प्रत्यक्षं द्रव्यं हेतुं बाधते। तस्य धर्म्मिणि सिद्धत्वात्। किन्तु प्रतिज्ञार्थमनुष्णत्वं॥[4] अथ प्रतिज्ञार्थस्य प्रत्यक्षेण बाधितत्वाद्धेतोस्तेन व्याप्तिर्न्नास्तीति हेतोः प्रमाणविरोध उच्यते। एवन्तर्हि विरुद्धेन साध्यधर्म्मेणाव्याप्तेः सन्दि[5]ग्धव्यतिरेको हेत्वाभास इत्यस्मत्पक्ष एव समर्थितः।

हेतोः प्रमाण[?मान]विरोधस्य हेत्वाभासानतिक्रमात्॥ (३३)

तदुक्तम्

प्रत्यक्षादि(वि)रोधा ये व्याप्तकालो[6]पपातिनः।
ते सर्वे न विरुद्धेन व्याप्तिधर्मेण युञ्जत (३४) इति॥

स्यान्मतम्प्रतिज्ञायाः प्रमाणविरोधस्तन्मात्रभावित्वाद्धेत्वाभासेऽन्तर्गमयितुं न पार्यत इत्यत आह।[7] प्रतिज्ञायाः प्रमाणविरोधः स्ववचनविरोधेन व्याख्यातः(12a2) कृतप्रतिक्रियस्तत्रेदमेव निग्रहाधिकरणमसाधनाङ्गभूतायाः प्रतिज्ञायाः साधनवाक्ये प्र[8]योग इत्यादिना। इति तस्मात् सर्व्वं एवेत्युपसंहरति। यत्तु विरुद्धमुत्तरमिति पूर्व्वपक्षोक्तमपरमुपक्षिपति तदसम्बद्धमेव। यस्माद्यदि ही(12a3)त्यदि। अनि[9]त्यः 60a
शब्द ऐन्द्रियकत्वाद् घटवदित्येकं बौद्धेनान्येन वा कृते मीमांसकः काणादोन्यो वा स्वपक्षसिद्धेन गोत्वादिना सामान्ये[1]न परस्य साधनवादिनो बौद्धस्य हेतोर्व्यभिचारसिद्धिमाकांक्षेत गोत्वमप्यैन्द्रियकं तदपि भवतोऽनित्यं प्रसज्यत इत्येव यदि परं प्रत्ये-

प्रतिपन्ने गोत्वे हेतुवृत्तेः संशयानोऽप्रतिपत्तिमात्मनस्तथा ख्यापयति[4] स च हेतुः सत्यसति गोत्वेऽप्रसाधितसाधनसामर्थ्यः संशये हेतुत्वादनैकान्तिक एव । प्रसाधिते तु सामर्थ्ये गोत्वेऽवृत्त्या हेतो [? हेतौ] न संशय एव सर्व-संशयप्रकाराणां[5] परिहारेण समर्थनात् । एतेन स्वपक्षानपेक्षहेतुप्रयोगस्या-नैकान्तिकता व्याख्याता । सोपि स्वाभि(म)तनित्यगोत्ववृत्तिहेतुमनित्य-

---

बाध्यारोप्याभिदध्याद् व्यभि[2]चारं तदा तस्य बौद्धस्य तत्सामान्यमैन्द्रियकं नित्यञ्च स्वपक्षविरुद्धं नित्यपदार्थानभ्युपगमान्नाभिमतमतश्च कथं व्यभिचार इति विरोधो व्याहतिरयुक्तत्वमिति[3] यावत् युज्यत उत्तरस्येत्यध्याहर्तव्यं । न तु पुनरेव-मसौ परस्यैवोपरि भारमुपक्षिप्य व्यभिचारमुद्भावयति तत्कथमुत्तरस्य विरोधः यतः स[4] ह्युत्तरवादी स्वयं प्रतिपन्ने नित्यत्वेन गोत्वे हेतोरैन्द्रियकत्वस्य वृत्तेः संश-यानः सन् किङ्घटवदैन्द्रियकत्वादनित्यः शब्दो भवतु किम्वा गोत्वा[5]दिवन्नित्य इत्य-प्रतिपत्तिमनिश्चयमात्मनस्तथा ब्रुवाणः ख्यापयति सत्पक्षे खल्वैन्द्रियकमपि गोत्वं नित्यं तस्मादयं सांप्रत्यनैकान्तिक इती[6]त्थमात्मीयमेवाभ्युपगमं पुरस्कृत्यानेकान्त-ञ्चोदयति । ततः साध्विवोत्तरमिति समुदायार्थः । स्यात् मतम्बौद्धस्य नास्त्येव-गोत्वं नित्यं ततो व्याहतमेवोत्तर[7]मित्यत आह । स च हेतु(12a5)रैन्द्रियकत्वादिति सत्यसति वा गोत्वे परमार्थतः । अप्रसाधितसाधनसामर्थ्यः सन् विपर्यये बाधक-प्रमाणावृत्त्या संशयहेतुत्वाद[8]नैकान्तिक एव । अप्रसाधितं साधनाय सामर्थ्यं साध्या विनाभावित्वलक्षणमस्येति विग्रहः । साधनशब्दो भावसाधनः । यदा तु बाधक-
60b प्रमाणबलेन हेतोरवि[9]नाभावं सर्व्वोपसंहारेण साधयति यत्किञ्चिदिन्द्रियज्ञानग्राह्यं स्वनिर्भासज्ञानजनकत्वात्तत्र सर्व्वमनित्यं नित्यत्वे सर्व्वदा तद्विषयं ज्ञानं प्रसज्जते न वा कदाचिदपि[1] तथाहि ।

स्वात्मनि ज्ञानजनने यच्छक्तं शक्तमेव तत् ।
अथवाऽशक्तं कदाचिच्चेदशक्तं सर्वदैव तत् ॥(३५)
तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता ।
नित्यत्वादचिकित्स्य[2]स्य कस्तां क्षपयितुं क्षम (३६) इति ॥

तदानीं गोत्वादीनामपि नित्यानामेकप्रघटेन इव पातितत्वात् गोत्वे हेतोर-वृत्तेर्न संशय एव भवति । एतेने(12a6)त्यादि सुज्ञानं । तत्रा[3]प्यनैकान्तिकहेत्वा-भासत्वानतिवृत्तिरिति संक्षेपः । तत्संशयहेतुत्वमुखेनानैकान्तिकत्वमसमर्थिते सति हेतौ । अन्यत्रापीत्येकपक्षप्रतिपन्नेपि[4] वस्तुनि तुल्यमिति नोभयसिद्धेतरयोर्वस्तुनोरनै-कान्तिकत्वविशेषः । यथा कथितमनन्तरमेव । स च हेतुः सत्यसति वेत्यादिना । इतर-

त्वे ब्रुवाणोऽसमर्थत(या) साधनाङ्गत[6]या संशयहेतुमेवाहेति । यत्पुनरुक्तमुभयपक्षसंप्रतिपन्नेन वस्तुनाऽनैकान्तिकचोदनेति तत्राप्यवश्यं संशयहेतुत्वमुखेनैवानैकान्तिको वक्तव्यः । तदसमर्थि[7]तेऽन्यत्रापि तुल्यमिति नोभयसिद्धेतरयोरनैकान्तिकत्वैर्विशेषः ।

यदप्युक्तं दृष्टान्ताभासहेत्वाभासपूर्वकत्वात्तदभिधानेनैवोक्ता इति न पृथग्निग्रहस्थानेषूक्ता इति[8] । तदप्यवयवान्तरवादिनोऽयुक्तं योऽवयवान्तरं दृष्टान्तहेतोराह तस्य न हेत्वाभासोक्त्या दृष्टान्ताभासोक्तिर्व्याप्त्या तद्वचनेन गम्यमानस्य तस्मात्साधनान्तराभावप्रसङ्गात् । दृष्टान्ताभासा[9]नां हेत्वाभासेप्यन्तर्भावाद् दृष्टान्तस्यापि हेतावन्तर्भाव इष्टो भवति । तथा च न दृष्टान्तः पृथक् साधनावयवः[10] स्यादपृथग्वृत्तेः । यो दृष्टान्तसाध्योर्थस्तस्य 12b
हेतावन्तर्भावाद्धेतुनैव साधित इति न दृष्टान्तस्य पृथक्किञ्चित्सामर्थ्यं । अपि च न किञ्चित्पूर्वपक्षवादिनो हेत्वाभासासंस्पर्शे न्या[1]य्यं निग्रहस्थान-

---

देकपक्ष[5]प्रतिपन्नमनैकान्तिकविषयत्वाच्चानैकान्तिकमिति व्याख्यातं । स्याच्चित्तन्ना-निष्टेर्दूषणं सर्व्वप्रसिद्धस्तु द्वयोरपि साधनं । दूषणन्त्वेत्येतत्कथमेवन्न[6] व्याहन्यत इति तच्च नैवं । निश्चितदूषणाभिसन्धिवचनात् । तत एव तदनन्तरमाहान्यः पुनः साध्यत्वमीक्षत इति । एतत्तु स्यात् । तदा द्वयोरेकस्यापि न जय[7]पराजयौ । यदप्युक्तमुद्योतकरेण प्रतिज्ञाविरोधसूत्रमेव विवृण्वता दृष्टान्ताभासा इत्यादि तदप्यवयवान्तरवादिनो नैयायिकस्यायुक्तं । बौद्ध एवैवं ब्रुवा[8]णः शोभत इत्यभिप्रेतं (।) तद्वचनेन हेत्वाभासवचनेन गम्यमानस्य दृष्टान्ताभासस्य तस्माद्धेतोः सकाशात् सा[9]धनान्तरत्वा- 61a
भावप्रसङ्गात् । दृष्टान्तस्येति शेषः ।

ननु च दृष्टान्ताभासानां हेत्वाभासेष्वन्तर्भावेऽतिदिष्टे हेतोर्दृष्टान्तेऽवयवान्तरं न प्राप्नोतीति वचन[1]मसम्बद्धमेवेत्यत आह । दृष्टान्ताभासानामि(12a9)त्यादि । अयमस्य प्रयोगो मनसि विजृम्भते । यद्यतोऽर्थान्तरभूतं न तदाभासवचनेन तदाभासवचनं न्याय्यं[2] न च तदाभासेषु तदाभासानामन्तर्भावः । तद्यथा प्रत्यक्षाभासानामनुमानाभासेषु । तथा च भवतो हेतोर्दृष्टान्तोर्थान्तरभूत इति व्यापकविरुद्धोपलब्धिः[3] अतोऽवश्यं दृष्टान्तस्य हेतावन्तर्भाव एष्टव्यः । तत्र च न दृष्टान्तः पृथक् साधनावयवः स्यात् । अपृथग्वृत्तेः एकव्यापारत्वादित्यर्थः । एतदेव व्या[4]चष्टे यो दृष्टान्त (12b1) इत्यादिना । एवं प्रतिज्ञाहेत्वोर्विरोधस्य प्रपञ्चस्य हेत्वाभासैः सङ्गृहीतत्वान्न पृथग्वचनं कर्त्तव्यमित्यभिधायाधुना प्रतिघहा[5]न्यादीनामपीयमेव गतिरित्यावेदनायाह । अपि चे(12b1)त्यादि । पूर्व्वपक्षवादिग्रहणमुत्तरपक्षवादि-

मस्तीति तत्सम्बन्धीनि सर्वाण्येव हेत्वाभासतावचनेनैवोक्तानीति न पृथग्वाच्यानि स्युः। अर्थान्तरगमनादेरपि हेतोरसा( म )र्थ्य एव सम्भवात्। नहि समर्थे हेतौ साध्ये च सिद्धेऽर्थान्तरगमनं कश्चिदारभतेऽसमर्थस्य मिथ्याप्रवृत्तेरिति ॥ त ॥

*पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्ना[? न्या]सः* (न्या० ५।२।५)। यं प्रतिज्ञातमर्थमनित्य(ः)[3] शब्द ऐन्द्रियकत्वादिति सामान्यवृत्त्या हेतोर्व्यभिचारप्रदर्शनेन स प्रतिषेधे कृते क एवमाहानित्यः शब्द इति परित्यजति तस्य प्रतिज्ञासंन्यासो[4] नाम[1] निग्रहस्थानमिति। अत्रापि यद्युद्भावितेपि हेतोर्व्यभिचारे न सपक्षं किं न गृह्येतानिगृहीत एव हेत्वाभासाभिधानादिति चेत्।[2] किमिदानीमुत्तर[5]प्रतिज्ञान्यासापेक्षया तस्य तदेवाद्यन्निग्रहस्थानमिति किमन्यैरशक्यपरिच्छेदैः क्लीवप्रलापचेष्टितैरुपन्यस्तैरेव त्वतिप्रसङ्गः स्यात्[6][3] पक्षप्रति( ? )प्रतिषेधे तूष्णींभवतस्तूष्णीं-

---

नोऽज्ञानादीनि हेत्वाभासस्पर्शानि संतीति[6] कथनार्थं। तत्सम्बन्धीनीति हेत्वाभासपूर्व्वपक्षवादिसम्बन्धीनि वा। अथोच्यते। अर्थान्तरगमनादीनां हेत्वाभासासंस्पर्शित्वान्न तेस्व[? ष्व]न्तर्भाव इ[7]ति। तच्चासत्। अर्थान्तरगमनादेरपि हेतोरसमर्थ एवमतिसम्भवात्। कुतः असमर्थस्य न्यायबलेन साध्यप्रतिपादने वादिन इति शेषः। मिथ्याप्रवृ[8]त्तेरर्थान्तरगमनादिनेत्यभिप्रायः ॥४॥

उत्तरः पश्चाद् फलभावी स चासौ प्रतिज्ञासन्यासश्च तस्यापेक्षया किन्न किञ्चि-
61b दित्यर्थः। अशक्तः परिच्छेदः सं[9]ख्ये येषां क्लीवप्रलापचेष्टितानां तानि तथा क्लीवादीनां प्रलापा येषां वादिनान्तेषां चेष्टितानि प्रतिज्ञासंन्यासादीनि वै किमुपन्यस्तैः(।) क(ः) पुनरेवं सति दोष इत्याह। एवं हृचतिप्रसङ्गः(11b6)स्यात्। एवमाद्यपीति मूर्च्छाविपथुत्रसत्त्वादीनामादिशब्देनावरोधः। तस्मादेतदप्यसम्बद्धं विद्वत्सदस्येवं प्रकारस्य स्थूलत्वादित्याभिप्रायः तदत्र भाविविक्तः स्वयमाशंक्य किल प्रतिविधत्ते स्थूलत्वेनेदं निग्रहस्थानमिति चेत्। प्राश्निकप्रतिवादिसन्निधौ प्रतिज्ञातार्थापह्नव-

---

[1] न्याय-भाष्ये पृ० २५९; न्या० वा. ५५४।

[2] न्या० वा. ता. (७०७)—"किमिदानीं हेत्वाभासादुत्तरसंन्यासापेक्षया तस्य प्रतिवादिनो हेत्वाभास एवाद्यं निग्रहस्थानमिति।"

[3] तत्रैव—"पक्षप्रतिषेधे तूष्णींभवतस्तूष्णींभावो० प्रलपतश्च प्रलपितं नाम।"

भावो नाम निग्रहस्थानं। प्रपलायमानस्य प्रपलायितन्नामेति एवमन्य न्य [? द ]पि वाच्यं स्यात् (।) तस्मादेतदप्यसम्ब(द्ध)धमिति ॥[7]

*अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरं* ( न्या० ५।२।६ ) निदर्शनमेकप्रकृतीदं वक्तव्यं परिणामात्मृत्पूर्वकाणां शरावप्रभृतीनां दृष्टं परिमाणमि[8]ति। अस्य व्यभिचारेण प्रत्यवस्थानं नानाप्रकृतीनामेकप्रकृतीनाञ्च दृष्टं परिमाणं इति। एवं व्यवस्थित [ ? प्रत्यवस्थित ] आह। एकप्रकृतिसमन्वय[9]प्रकाराणां परिणामदर्शनात्सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं परिगृह्यते। तस्य प्रकृ( त्य )न्तररूपसमन्वयाभावोऽसत्येकप्रकृतिकत्त्वमिति तदविशेषोक्ते हेतौ प्रतिषेधं ब्रु[1]वतो हेत्वन्तरम्भवति। सति हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्त्वान्निग्रहस्थानं[1] (।) अत्रापि पूर्वस्यैव हेतोरनैकान्तिकस्याभिधानान्निगृहीते हेत्वन्तरचिन्ता कोपयुज्य[2]ते। यदि प्राक्साधनवादी हेतुमनैकान्तिकमुक्त्वा दत्तोत्तरावसरस्तेनैव निगृह्यते। अदत्तोत्तरावसरो हेत्वन्तराभिधानेपि न निग्रहमर्हत्यविरामात् ॥[3] ॥ 13a

---

ङ्करोतीति। असम्बद्ध[3]मुच्यते तन्नाभिप्रायापरिज्ञानात्। न ब्रूमो ध्वंसी शब्द इति किन्तु संयोगविभागाभ्यां न व्यक्त इत्ययं प्रतिज्ञातार्थ इत्याह सामान्यस्य च स्वाश्रयव्यङ्ग्य[4]त्वात् विवादाभाव इति। निग्रहस्थानन्तु पूर्वमप्रतिज्ञातार्थत्वात्। अनैकान्तिकदोषेण प्रतिषेधे हेतौ प्रतिज्ञातार्थापह्नवङ्करोतीति निगृह्यत इति[5] तत्रवाच्यं यदि वादी साकांक्ष एवान्तराले केनचिद् दुर्विदग्धेनानैकान्तिकदोषेण चोदितः सन्प्रतिज्ञातार्थफलीकरणेन स्वाभिप्रायमाविष्करोति। तदा[6]न्योपि न कश्चिद्दोषः। किमङ्ग पुनः प्रतिज्ञासंन्यासः। अथ निराकांक्षः सन् पश्चाच्चोदितः प्रतिज्ञां विशिनष्टि। तदप्यनैकान्तिकदोषेणैव निगृह्यत इति कि[7]मुत्तरप्रतिज्ञासंन्यासापेक्षयेति न किञ्चित्परिहृतं किञ्च स्फुटमिदं प्रतिज्ञान्तरेन्तर्भवतीति नः पृथग्वाच्यमिति ॥४॥

अविशेषोक्ते हेतावित्यादि सूत्रं[8] अत्र निदर्शनमुदाहरणमित्यर्थः। कापिलः प्रमाणयति प्रधानसिद्धिप्रत्याशया। एकप्रकृतीदं व्यक्तं व्यक्तादिपरिमितत्वाद् घटशरावादिवदिति। एका प्र[9]कृतिरस्येति विग्रहः। प्रकृतिरुपादानकारणं। या च 62a
किल सा प्रकृतिर्विकारग्रामस्य तत्प्रधानमितीयमलीकप्रत्यासा[? शा] साङ्ख्यस्या-

---

[1]न्यायभाष्ये (२५९-६०) अल्पभेदेन।

*प्रकृतादर्थादप्रतिबद्धार्थमर्थान्त(रं[१])* ( न्या० ५।२।७ ) । "यथा-कलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां कुर्यान्नित्यः शब्दोऽस्पर्शत्त्वादिति हेतुः । हेतु[4]श्च नाम हिनोतेर्धातोस्तुशब्दे प्रत्यये कृदन्तं पदं (।) पदञ्च नामाख्यातोपसर्गनिपाता इति प्रस्तुत्य नामादीनि व्याचष्टे । इदमर्थान्तरं"[२] नाम निग्रहस्था[5]नं "अभ्युपगतार्थासङ्गतत्वादिति"[३] । न्याय्यमेतन्निग्रहस्थानं पूर्वोत्तरपक्षवादिनोप्रतिपादिते दोषे प्रकृतं परित्यज्या-साधनाङ्गवचनमदोषो[6]द्भावनाञ्च । साधनवादिना ह्युपन्यस्तसाधनस्य

---

परिमाणञ्चतुरस्रम्परिमण्डलमित्यादि । मृत्पूर्व्वकाणामित्यन्वयमाह । अस्य हेतो-र्व्यभिचारेण प्रत्यवस्थानं प्रतिवादिना क्रियते । नानाप्रकृतीनाङ्गवाश्वादीनामेक-प्रकृतीनाञ्च कुम्भोदञ्चना[2]दीनान्दृष्टम्परिमाणमित्येवं प्रत्यवस्थिते सति प्रति-वादिनि । यदि वा प्रत्यवस्थितः प्रतिषिद्धः प्रधानवाद्याह । एकप्रकृतिसमन्वये सति परिमाणदर्शना[3]दिति सविशेषणत्वाद्धेतोर्व्यभिचाराभाव इति मतिः । कथं पुनरेकप्र-कृतिसमन्वय इत्याह । सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृहय[4]ते । सर्व्वत्र तत्कार्यदर्शनादित्याकूतं । तथाहि सुखबहुलानाम्प्रसादलाघवप्रसवाभिष्वङ्गाद्धर्ष प्रीतयः कार्यं । रजोबहुलानां शोषतापभेदस्त[5]भोद्वेगापद्वेषाः । तमोबहुलानां साव-रणमादनायध्वंसवीभत्सदैन्यगौरवाणि । एतानि च सर्व्वाणि सर्व्वत्रैव यथोत्कर्षाप-कर्षभेदमुपलभ्यन्ते । त[6]स्मात्त्रैगुण्यप्रकृतीदं विश्वं । तदिदमित्यादिना निग्रहस्थानत्वे कारणमाह । अत्रापीत्याद्यस्य प्रतिषेधः सुज्ञानः । अविरामादच्छेदादपरिसमाप्त-त्वात्[7] साधनाभिधानस्येत्यर्थः ॥०॥

यथोक्तलक्षण इत्येकाधिकरणौ विरुद्धौ धर्माविति पक्षप्रतिपक्षलक्षणं स्म-रयति । परिग्रहे वादिप्रतिवादिभ्यां कृते सति हेतुतः[8] साध्यसिद्धौ प्रकृतायां हेतुवसा[?शा]त्साध्यसिद्धिरित्येतस्मिन्प्रकरणे सति प्रकृतोर्थः शब्दनित्यत्वं । तेना-
62b सङ्गतत्वात् । तदसम्बद्धत्त्वात्तदनुपकारकत्वादित्यर्थः (।) तथा[9] हि विनापिरूपसि-द्धया प्रातिपदिकादिव्याख्यानं यथा कथञ्चित्प्रतिपादितादर्थादेवार्थः सिध्यति । न्याय्यमेतदिति स्वमतेनाविरुद्धत्वादभ्यनुजानाति । कदा च पूर्वो[1]त्तरपक्षवादिनो-र्न्याय्यं निग्रहस्थानमित्याह । प्रतिपादिते दोषे सति वादिप्र(ति)वादिभ्यामन्यो-न्यमसाधनाङ्गवचनमेतददोषद्भावनञ्च भवेदिति अन्यथा न हय[2](न)-

---

[१]दप्रतिसंबन्धार्थमर्थान्तरम्—इति न्यायभाष्ये पाठः ।

[२]न्या० भा० पृ० २६० । [३]न्या० वा० पृ० ६४६ ।

समर्थने कर्त्तव्ये तदकृत्वा परस्य प्रसङ्गेनाप्रसङ्गेन वाऽजनान्तरी(य)कस्या-
भिधानमुत्तरवादिनोपि दोषो[7]द्भावनमात्रादपरस्योपक्षेप इति ॥[1]

*वर्णक्रमनिर्देशवन्निरर्थकं* (न्या० ५।२।८)। "यथा नित्य (:) शब्दो
जबगडत्वात् झभघढवदिति" "साधनान्युपादानान्निगृह्यत" इ[8]ति (।)
इदमप्यसम्बद्धं नहि वर्णक्रमनिर्देशसिद्धावानर्थक्यं यदेव किञ्चिदसाध-
नाङ्गस्य वचनं तदेवानर्थकं साध्यसिद्ध्युपयोगिनोऽभिधेयस्याभावात्[9] 13b
निष्प्रयोजनत्वाच्चेति । प्रकारविशेषोपादानमसम्बद्धं। *वते*रुपादानाद-
दोष इति चेत्। स्यादेतद्वर्णक्रमनिर्देशवदिति *वति*रत्रोपात्तः सोन्यदाप्य-
ननुरूपं गृह्णातीत्यदो[1]ष इति नार्थान्तरादेर्निग्रहस्थानस्यावचनप्रसङ्गात्।
एवं हि ता निरर्थं [? निरर्थका] वाच्या निरर्थकेनैवाभिधानाद्वित
[? तं]न साध्यसिद्धावनर्थकं निरर्थकं यस्य नैव कश्चिदर्थस्तन्निर[2]र्थकमिष्ट-
मिति चेत्। यस्य कस्यचिद्वादिनो पि हि निरर्थकाभिधाने किन्न निग्रहो
निग्रहनिमित्ताविशेषात्। तस्येहाऽप्रस्तावादिति चेत्। आयातमिह यो निर-

---

योरेकस्यापि जयपराजयावित्युक्तं । प्रकृतं परित्यज्येति न्याय्यतामेवास्य
प्रतिपादयति। प्रकृतमत्र साध्यसाधनहेत्वभिधानं तदकृत्वेति उपन्यस्ते दोषे[3] न
समर्थनं। अपरस्य(13a7)रूपासिध्यादेः। अतन्नान्तरीयकस्यापीति। उपन्यस्त-
साधनसमर्थनाङ्गस्येत्यर्थः। अपरस्य नामादिव्याख्यानादेरुपक्षे[4]पः पराजयस्थान-
मिति वर्त्तते ॥४॥

वर्णक्रमनिदेश(व)न्निरर्थकं (न्या० सू० २।१।८) यत्र वर्णा एव केवलं क्रमेण
निर्दिश्यन्ते। न पदन्नापि वाक्यं। अर्थान्तरे किलाप्र[5]कृतार्थकथनमिह वर्णमात्रोच्चा-
रणमिति शेषः ॥ असम्बद्धतामेवाह। नहि वर्णक्रमनिर्देशादेव(13a9)केवलादानर्थ-
क्यमपि तु यदेव किञ्चिदसाध[6]नाङ्गस्यासिद्धविरुद्धादेः शब्दरूपसिध्यादेश्च वचन-
न्तदेवानर्थकं। किं कारणं। साध्यसिद्ध्युपयोगिनोऽभिधेयस्याभावात्। साध्यसिद्ध्यु-
पयोगिनोऽभावे[7]पि कस्यान्यत्प्रयोजनमस्तीत्यपि न मन्तव्यं इति कथयति।
निष्प्रयोजनत्वाच्चेति। साध्यसिद्धेरेव प्रस्तुतत्वादन्यप्रयोजनवत्वेपि आनर्थक्यमेव
तत्र प्रस्ता[8]व इत्यभिप्रायः। तस्मात्प्रकारविशेषोपादानवर्णक्रमनिर्देशवदित्यसम्बद्धं।
परः प्राह। न साध्यसिद्धौ यदनर्थकमनङ्गन्तन्निरर्थकमभिप्रेतमपि[9] तु यस्य वचनस्य 63a
काकवासितादेरिव नैव कश्चिदर्थः। तथा च नार्थान्तरापार्थकादीनामनेनैव संग्रहस्तत्र-

---

[1] "कीर्तिनाप्यनुमोदितं"—न्या० मं० पृ० ६४६।

र्थकं ब्रवीति[3] तस्य तेनैव निग्रह इति। तत्तुल्यं सर्वस्यासाधनाङ्गवादिन इति। स सर्वो निरर्थकाभिधा( नो )प्यनेनैव निग्रहस्थानेन निग्रहार्हः। न च वर्णक्रमनिर्देश (:) सर्व[4]त्र निरर्थकः, क्वचित्प्रकरणे तस्याप्यर्थवत्त्वात्। तस्मादत्रैवास्यानर्थक्यात् निग्रहस्थानत्वं। अपिचान्यदिदमुच्यते वर्णक्रमनिर्देशो निग्रहस्थानमिति।[5] कपोलवादितकंद्यघट्टितकमित्येवमादीनामपि वाच्यत्वात्[१]॥

*पर्षत्प्रतिवादिभ्यान्त्रिरभिहितमप्यविज्ञातार्थं* (न्या० ५।२।९)। "यद्वाक्यं पर्षदा प्रतिवादिना च त्रिरभि[6]हितं न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातार्थमसामर्थ्यसम्वरणाय प्रयुक्तं निग्रहस्थानमिति" (।) नेदं निरर्थ[7]काद्भिद्यते। सपदि प्रकृतार्थसम्बद्धं गमकमेव कुर्यात् नास्यासामर्थ्यं न च जाड्यात्पर्षदादयो न प्रतिपद्यन्त इति न विद्वान्निग्रहमर्हति पर्षत्प्रतिभासपरिकल्प्यार्हवच[8]नान्निग्रहार्ह एवेति चेत्। न्यायवादिनो जाड्यादुक्तमजानन्किन्न

---

कस्यचिदर्थलेशस्य सद्भावात्। आचार्य आह[1] (।) यस्य कस्य चिद(13b3)प्यादिनोपि निरर्थकाभिधाने वाहित इव किन्न निग्रहो भवति। कथं स्यादित्याह (।) निग्रहनिमित्तस्य निरर्थकाभिधानस्य वाद्यवादिनोरवि[2]शेषात्। नेति परन्तस्य वादिन इह वादप्रकरणे। आयातमित्याचार्यः। तस्य तेनैव निरर्थकाभिधानेन। तत्रैवं स्थिते वादे तुल्यं। सर्वस्यासाधनाङग[3]वादिनो निरर्थकाभिधायित्वमित्यध्याहर्त्तव्यं। क्वचित्त्वेतिपाठः। तत्र नोपस्कारेण किञ्चित्। अनेनैव निरर्थकाभिधानेन। प्रत्युच्यते। यस्य नैव[4] कश्चिदर्थ इति। एतदप्यसम्बद्धं। यस्मान्न च वर्णक्रमनिर्देशोपि निरर्थकः क्वचित्प्रकरणे प्रत्याहारादावर्थवत्वाच्च। तस्मादत्रैव वादेस्य वर्णक्र[5]मस्यानर्थक्यं। तच्चार्थान्तरादेरपि तुल्यमिति चित्तं कक्कङपिङिगतमित्यत्रादिशब्देन उत्प्लुत्य गमनं तालदाननृत्त[? नृत्य]दीनाङगहणं ॥४॥

त्रिर[6]भिहितमिति त्रिवचनङकार्यमिति न्यायत्वं दर्शयति। सकृदुक्तं स्पष्टार्थमपि कदाचिन्न ज्ञायत इति त्रिरुच्चारणङकार्यं। कस्मात्पुनः पदवाक्यप्रमाणवि[7]द्-

---

[१] "कपोलवादितकक्ष्याभिताडनादीन्यपि कामं निर्दिश्यन्ताम्। अत एवोन्मत्तप्रलापतः शाक्यभिक्षवोऽपि परिशुद्धबोधिनः परलोकयाथार्थ्यदर्शिनः शौचाचारव्यवहारेष्वबाह्या महान्तो विद्वांसः काममर्थशून्यमपि कथयन्तो नोन्मत्ता भवितुमर्हन्ति।" न्या० मं० ६४७।

प्रतिवादी निगृह्यते । जाड्यात्पर्षदादेरपि ज्ञातप्रतिपादनासामर्थ्ये इति विजेता न स्यान्न नि[9]ग्रहार्हः । असम्बद्धाभिधाने निरर्थकमेवेति न पृथग्विवक्षितार्थं नाम निग्रहस्थानमिति ॥ तृ ॥ 14a

*पौर्वापर्यायोगादप्रतिबद्धार्थ*[1] *मपार्थकं* (न्या० ५।२।१०)। "यत्रानेकस्य पदस्य वाक्यस्य वा[1] पौर्वापर्येण योगो नास्तीत्यसम्बद्धार्थता गृह्यते। तत्समुदायार्थापायादपार्थकं दशदाडिमादि वाक्यवत्। इदं किल पदानामसम्बद्धादसम्बद्धवर्णान्निरर्थकात्पृथ[2]गुक्तं (।) नन्वेवमसम्बद्धवाक्यमपि

---

भिर्वाक्यन्न ज्ञायत इत्याह। क्लिष्टशब्दमित्यादि। क्लिष्टशब्दं मनागुच्चारितत्वात्। अपशब्दत्वादित्यपरे। कस्मादेवं प्रयुक्तमित्याह। असामर्थ्यसम्वरणा[8]र्थे (13b9) ति। स्पष्टार्थस्य प्रयोगे दूषणम्वक्ष्यतीति भयात्प्रयुंक्ते। इदञ्च साधनदूषणवादिनोः समानं। दूषणवाक्यमपि ह्येवंभूतनिग्रहप्राप्तिकारणं। नेदं[9] निरर्थकाद्- 63b भिद्यते। तथा हि श्लिष्टशब्दादिभिः प्रकृतार्थसम्बद्धङ्गमकमेव ब्रूयात्। एतद्विपरीतम्वा। प्राक्तने प्रकारे नास्यासामर्थ्यन्तत्र तु परिषदादयो जाड्या[1]त्तदुक्तन्न प्रतिपद्यंत इति नेयता विद्वान्वादी निग्रहमर्हति।

वक्तुरेव हि तज्जाड्यं यच्छ्रोता नावबुद्धयते ।(३७)

ततोसौ निग्रहार्ह एवेत्याकूतवानाह परः। परिषत्[2] प्रज्ञामिति। न्यायवादिन (13b9) इति परिहरति। न्यायवादिनः उक्तमिति सम्बन्धः। वादी तु जाड्यात्परिषदादेरविज्ञातसाधनसामर्थ्य इति कृत्वा विजेता न स्यात्। परिषत्प्रतिवादिप्रत्यायनेन जयव्यवस्थापनात्। अविज्ञातं प्रतिपादनसामर्थ्यं परिषत्प्रतिवादिभ्यां यस्येति कार्यं। द्वितीयन्तु विकल्पमधि[4]कृत्याह। असम्बद्धाभिधाने निरर्थकमेवे (14a1) ति ॥४॥

अनेकस्य पदस्येति। ।यदानीमसम्बद्धार्थप्रतिपादकत्वे वाक्यार्थप्रतिपादकत्वं निराकरोति[5] वाक्यस्यासम्बद्धार्थप्रतिपादकत्वे प्रकरणाध्यायप्रतिपत्यभावः। समुदायप्रतिपत्यभावाच्च निग्रहस्थानं। उदाहरणं दश डा[?दा]डिमाः षडपू[6]पाः कुण्डमजाजिनं पललपिण्डं। अथ रौरुकमेतत् कुमार्यः स्फैयकृतस्य पिता प्रतिशीन इति अत्र च भारद्वाजेन निरर्थकापार्थकयोरभेद इत्याशङ्क्य[7] प्रतिविहितं तत्र हि वर्णमात्रमिह यदान्यसम्बद्धानीति। तदेवाचार्योप्युपक्षिपति। इदं किले (14a2) त्यादिना। असम्बद्धा वर्णा यस्मिन्निरर्थक इति विग्रहः। कि[8]ल शब्दोऽनभिमतत्व-

---

[1]दप्रतिसंबद्धार्थ—इति न्या० भा० पाठः।

पृथग्वाच्यं । नोभयसंग्रहात् । अपार्थकान्निरर्थकस्यासङ्ग्रहप्रसङ्गात् । एवम्विधार्थविशेषसमाश्रयात् । पृथग् निग्रहस्थानलक्षणप्र[3]लपनेऽति-प्रसङ्गेप्युक्तः न च संग्रहनिर्देशे कञ्चिद्दोषं पश्यामः । प्रभेदे वा गुणान्तर-मिति यत्किञ्चिदेतत् ॥

*अवयवविपर्यासवचन*[4]*मप्राप्तकालं* ( न्या० ५।२।११ ) । "प्रतिज्ञा-दीनां यथा लक्षणमर्थवशात्क्रमस्तत्रावयवानां विपर्ययेणाभिधानं निग्रह-

---

प्रदर्शनार्थः । अनभिमतत्वमेवाह । नन्वयं पदानामसम्बन्धादपार्थकवदसम्बन्ध-
64a वाक्यमपि निरर्थकात् पृथग् वाच्यं स्यात् । स्यात्मतमपार्थकं[9] नैवासम्बद्धपदार्था-
सम्बद्धवाक्यार्थयोः सङ्गृहीतत्वात् पृथग् न वाच्यमित्यत उच्यते । नोभय-
सङ्ग्रहाद(14a3)पार्थकं युक्तं । कस्मादसम्बद्धपदार्थेनापार्थकेनैवासम्बद्धवा[1]क्यस्येव
निरर्थकस्यापि वर्ण्णक्रममात्रलक्षणस्य सङ्ग्रहप्रसङ्गात् । अथोच्यते । निरर्थकं किमु-
च्यते । यस्यार्थ एव नास्ति केवलं वर्ण्णक्रममात्रं । असम्बद्धपद[2]वाक्ययोस्तु साध्य-
सिद्धचनुपयोगेपि न सर्वथा नैरर्थक्यमतोऽर्थतत्वे साम्यात् द्वयोरेवैकीकरणमित्यत
आह । एवं विधाच्चेत्यादि । कपोलवादितादीनामपि[3] पृथगभिधानप्रसङ्ग
इत्यत्रातिप्रसङ्ग उक्तः । नहि किञ्चित्मात्रेण विशेषो न शक्यते क्वचित्प्रदर्शयितु-
मित्यभिसन्धिः अथ निरर्थकापार्थकयोः[4] सङ्ग्रहनिर्देशदोषं भेदनिर्देशे च गुणम्प-
श्यताऽक्षपादेन न सङ्ग्रहनिर्देशः कृत इति मन्यसे । न साधु मन्यस इत्याह । न च
सङ्ग्रह (14 a 4) इत्यादि ॥४॥[5]

यथा लक्षणमर्थवसा[?शा]दित्यर्थः सामर्थ्यं । अनुपदर्शिते हि विषये निर्विषया
साधनप्रवृत्तिर्मा भूदिति साध्यनिर्देशलक्षणा प्रतिज्ञा पूर्व्वमुच्य[6]ते । तदनन्तरमुदाहरण-
साधर्म्यात्साध्यसाधनं हेतुरित्येवं लक्षणो हेतुस्तत्साधनायोच्यते । ततो हेतोर्वहिर्व्या-
प्तिप्रदर्शनार्थं साध्यसाधर्म्यात्तद्धर्मभाविदृ[7]ष्टान्त उदाहरणमि(न्या० सू० १।१।३६)
त्येवं लक्षणमुदाहरणं । ततः प्रतिबिंबनार्थं साध्यधर्मिणि सम्भवप्रदर्शनार्थम्वा-
उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वेति[8] साधनस्योपनय (न्या०सू० १।१।३८)
इत्येवंलक्षण उपनयः । तत उत्तरकालं सर्व्वावयवपरामर्षेण[?र्शेन] विपरीतप्रसङ्ग-
64b निवृत्यर्थं हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निग[9]मनमि(न्या० सू० १।१।३९) त्येवं
लक्षणं निगमनमिति । अयमसौ यथालक्षणमर्थवसा[?शा]त्क्रमः । तथाहि लोकेपि
पूर्व्वङ्कार्यं मृत्पिण्डाद्युपादीयते पश्चात्तु करणञ्चक्रदण्डादिकमिति[1] न्यायः ।
तत्रैतस्मिनक्रम[?न्क्रमे] न्यायतः । स्थितेऽवयवानां प्रतिज्ञादीनां विपर्ययेणाभिधानं

स्थानं ।"[१] "नैवमपि सिद्धेरिति चेत्"[२] । न ( । ) प्रयोगापेतश[5]ब्दतुल्य-
त्वात् । यथा गौरित्यस्य पदस्यार्थे गोणीति प्रयुज्यमानं पदङ्ककुदादिमन्त-
मर्थं प्रतिपादयतीति न शब्दार्थाख्यानं व्यर्थं । अनेन च पदेन[6] गोशब्द-
मेव प्रतिपद्यते गोशब्दात् ककुदादिमन्तमर्थं तथा प्रतिज्ञाद्यवयवविपर्यये-
णानुपूर्वीं प्रतिपद्यते । आनुपूर्व्या चार्थमिति । तथा हि पूर्वं कर्म्मोपादी[7]-
यते ततः कर(णं) (मृत्) पिण्डादिकं लोक इति ।"[३] तदेतदुन्मत्तस्योन्मत्त-
सम्वर्णनमिव प्रयोगापेतशब्दवदेतदिति । यदि गोणी-शब्दात्ककुदादि-
मत्यर्थे प्रतीतिशब्दान्वा[8]ख्यानप्रयत्नेनार्थं पश्यामः । गोणीशब्द- 14b
स्यार्थप्रतिपादनेऽसामर्थ्यात् प्रतिपादकव्युत्पत्त्यर्थमन्वाख्यानमिति चेत् ।

ननु गोणीशब्दादपि लोके प्रतीतिर्दृ[1]ष्टा । सत्यं दृष्टा न तु साक्षा-
दित्युक्तं । उक्तमेतन्न पुनर्युक्तं स्त्रीशूद्राणामुभयप्रतीतेरभावात् । यः खलूभयं
वेत्ति शब्दमपशब्दञ्च स एवं प्रतिपद्यते । यस्तु नक्क[2]शब्दम्मुक्कशब्दमेव वा

---

निग्रहस्थानं । यथा घटवत्कृतकत्वादनित्य इति । नैवमपि सिद्धेरिति भार[2]द्वाजः स्वयमेवाशङ्क्य परिहरति । न प्रयोगापेतशब्दवदेतत्स्यादिति अनेनेति गोणीपदेन । यथा (।)

अम्बम्बिति यथा वालः शिक्ष्यमाणः प्रभासते[?षते ।]
अव्यक्तं[3] तद्विदान्तेन व्यक्ते भवति निश्चयः । (३८)

तथा किल गोण्यादयः शब्दाः ते साधुष्वनुमाणे[?ने]न प्रत्ययोत्पत्तिहेतव इति । तदेतदुन्मत्तकस्य वैया[4]करणस्योन्मत्तकसंवर्ण्णनमुन्मत्तकेनोद्योतकरेण संवर्ण्णनं यथा ह्येक उन्मत्तो द्वितीयमुन्मत्तकं सम्वर्ण्णयति तथा भूतमेतदपीति या[5]वत् । यदि चोन्मत्तकस्योद्योतकरस्योन्मत्तकस्य वैयाकरणस्य सम्वर्ण्णनं । तथा हि शाब्दिक एव तावदुन्मत्तः प्रमाणविरुद्धवस्त्वाभिधायित्वात् । तत(:) कु[6]तस्तत्प्रक्रियायाः प्रमाण-चिन्ताया ज्ञापकत्वमित्यभिप्रेतं । कथम्पुनः शाब्दिकस्यायुक्ताभिधायित्वमित्याह । यदि(14a4)त्यादि सुबोधं । स्त्रीशूद्रशब्दो मूर्खवचनः ।[7] यस्तु नक्कशब्दं मुक्कशब्द-मेव नासापर्यायम्वेत्ति । स कथमपशब्दाच्छब्दं साधुं प्रतिपद्यातः साधोः शब्दा-दर्थम्प्रतिपद्येत । किमुच्यते नैवासौ तथा विबोधम्प्रतिप[8]द्यत इत्याह । दृष्टाचानुभय-वेदिनोपि (14b3) सनकादेः प्रतीतिरिति तस्मान्न परम्परया प्रतीतिरर्थस्य । अयमत्र
संक्षेपः । स्यादेवमसाधूनां साध्वनुमापकत्वम् । य[9]द्येषान्धूमादीनामिव त्रैरूप्यम्भवे- 65a

---

[१]न्या० भा० पृ० २६१ ।    [२]दिङ्नागेन कृत आक्षेपः ।
[३]न्या० वा० पृ० ५५५-५६ ।

वेत्ति न नासाशब्दं स कथमपशब्दाच्छब्दं प्रतिपद्येत ततोर्थं प्रतिपद्येत (।) दृष्टा चानुभयवेदिनोपि प्रतीतिरिति न परस्परं या[3]पि प्रतीतिरर्थे-

---

न्निश्चितं। तच्च न सम्भवति। यस्मादेतावदनुभयवेदिनः सनकादयस्ते सन्तमपि व्याप्यव्यापकभावन्न प्रतिपद्यन्ते। न चासाव[1]ज्ञातो गमको ज्ञापकत्वात्। येपि शब्दापशब्दप्रविभागकुशलास्तेप्यविद्यमानत्वादेव भावयन्ति। तथाहचसाधूनां साधुभिः सम्बन्धस्तादात्म्यं कार्यकारणभावो वा[2] भवेत। तदुभयविकलस्याव्यभिचारनियमाभावात्। तत्र च तावन्न तादात्म्यमभ्युपेयं पारमार्थिकस्यैव भेदस्य स्फुटं प्रत्यक्षतः प्रतीतेः। शब्दवद[3]साधोरप्यव्यतिरेकतो वाचकत्वप्रसङ्गाच्च। तदुत्पत्तिरपि दूरोत्सारितेव। यतो नासाधवः साधुभ्यो जायन्ते। क(ा)रणगुणवक्तुकामतामात्रहेतुत्वा[4]त्तेषां। न च तेषान्नित्यत्वङ्काचित्कोपलम्भतः। तत्वे वा सुतरान्तदुत्पत्तेरभावः सत्यपि वा व्याप्यव्यापकभावे तत्परिज्ञाने च पक्षधर्मत्ववैक[5]ल्याच्चाक्षुषत्वादेरिवासाधुभ्यो नानुमानं। नहचत्र धर्मे विद्यते। यतः पक्षधर्मत्वं निष्पद्यते। नहि साधूनामेव धर्मित्वन्तेषामेवानुमीयमानत्वात्। न च धर्मिसा[6]धनं युक्तिमतः। भावाभावोभयधर्मस्यासिद्धविरुद्धानैकान्तिकदोषदुष्टत्वतः। कथं वा साधूनां तत्धर्मत्वं। नहि तत्काले ते सन्ति। असतांञ्च धर्मित्वं वाचकत्वं[7] चेति सुभाषितं। किमुच्यते पुरुषो धर्मी साधुशब्दविवक्षा साध्यधर्मः पक्षधर्मश्चासाधुरिति तदप्यसम्बद्धं।
65b व्याप्यव्यापकभावाभावादेव। यस्मान्न च[8] गोणीशब्दप्रयोगकाले गोशब्दविवक्षामुपलभामहे। अथ प्रत्यवस्थीयते। यथा पक्षधर्मत्वादिवैकल्येप्यव्यक्तं। बालवचोव्यक्तमनुमापयति। तथैवासाधवोपि[1] साधूनिति (।) तदयुक्तं तत्रापि तुल्यपर्यनुयोगत्वात्। वयन्तु प्रतिपद्यामहे साक्षादेव तस्मादप्यव्यक्तान्मात्राद्यर्थः प्रतीयत इति। तत्र संज्ञासंज्ञिसम्बन्धस्याननुभूत[2]त्वादयुक्ताप्रतीतावित्यपि न मन्तव्यं। अनादिमति संसारे व्यवहारपरम्परायास्तथाभूतायाः सम्बन्धस्योल्लिङ्गितत्वात्। तथाहि न गवादिशब्दानामपि प्रा[3]यः शृङ्गङ्ग्राहिकयार्थनियमः सङ्केत्यतेपि तु व्यवहारपारम्पर्यतो विदग्धा निश्चिन्वन्ति। तच्चेहापि समानमेव। तस्मादेतदरण्यरुदितं।

अम्बम्बिति यथा बालः शिक्ष्यमाणः प्रभासते।
अव्यक्तन्तद्विदान्तेन व्यक्तेन भवति निश्चयः ॥(३९)
एवं साधौ प्रयोक्तव्ये यो यद्भ्रंशः प्रयुज्यते।
तेन साधु व्यवहितः कश्चिद[5]र्थोवसीयत (४०)इति ॥

यदप्यभ्यधायि कुमारिलेन।

ऽसमर्थस्य शब्देपि प्रतीतिजननासामर्थ्याच्च । नह्यर्थेपि वाचकत्त्वं नामान्यदेवान्यत्र तद्विषयप्रतीतिजननात् । अपशब्दश्चेच्छब्दे प्रती[4] तिञ्जनयेत् । अर्थ एव किन्न जनयति । न ह्येतस्यार्थात् किञ्चिद्भेदं पश्यामो येन तं परिहरेत् । अकृतसमयस्य शब्देप्यप्रतीतिजननाच्च । नह्ययमप[5]-शब्दः शब्देपि स्वभावतः प्रतीतिं जनयत्यदर्शनासमयत एव तु जनयेत् । समयवसा[ ? शा ]त्प्रवर्तते । एवं हि प्रतिपत्तिपरम्परापरिश्रमः परिहृ[6]तो भवति । विपर्ययदर्शनाच्च । शब्दादर्थमप्रतिपद्यमाना अप-शब्दैरेव ज्ञानं व्युत्पद्यमाना लोके दृश्यन्ते इति व्यर्थं शब्दानुशासनं ।

---

गोशब्देऽवस्थितेस्माकन्तदशक्तिजकारिता ।
गाव्यादेरपि गोबुद्धिर्मूलशब्दानुसारिणी(४१)ति ॥

तस्यापीद[6]मेव प्रतिविधानमिदञ्च सर्वमागूर्य्य निगलयति । न परम्परया प्रतीतिरिति । अत्रैवोपचयमाह । अर्थे प्रतिपादनायासमर्थस्यासाधोः शब्देपि साधौ प्रतीतिज[7]ननासामर्थ्याच्च । तत्रैतत्स्यान्न वयमसाधूनामर्थेषु प्रतीति-जनकत्वं निराकुर्मः । किन्तु वाचकत्वं । शब्दे चासाधुः प्रतीतिजनक एव न वाचक एव इत्यत आह । न ह्य[8]र्थेपि शब्दस्य वाचकत्वमन्यदेवे(14b4)-त्यादि । यद्यसाधोरर्थे प्रतीतिजनकत्वमिष्यते । तदैतावता वयमाहितपरितोषाः । किमस्माकमभिधानान्तरकल्पितेन वाचक[1]त्वेनेत्याकूतं । नैव तद्द्यर्थसावर्थप्रतीतिं जनयितुं क्षमोऽपि तु शब्द एवेति चेदाह । अपशब्दश्चेदि(14b4)ति । अथोच्यते शब्देन तस्य स्वाभाविकः सम्बन्धो नार्थेन ततस्तमे[2]व प्रतिपादयति नार्थन्तद्यथा स्वभावतश्चक्षूरूपं प्रकाश(य)ति न शब्दादीनत आह । अकृतसमयस्ये(14b5) 66a
त्यादि । अदर्शनादिति । न ह्यप्रतीतसम्बन्धाः सिंहलशब्दा आर्य[3]जनव्यवहा-राय वर्त्तन्ते । समय एव तु जनयेत् प्रतीतिं । सामयिके च तत्र सम्बन्धे सोर्थेप्य-निवार्यः । समयवसा[? शा]दसाधुः साधौ वर्त्तमानोर्थ एव गवादौ[4] किन्न प्रवर्तते । नहि किञ्चित्तथा दोषो गुणस्तु केवल इत्याह । एवं हीत्या(14b6)-दि । एतदुक्तम्भवति । ये स्वभावतः प्रकाशका न ते समयमपेक्षन्ते । यथा चक्षुर्दी-पा[5]दयो रूपादीनां । स्वभावतश्चापशब्दो यदि शब्दस्य प्रकाशको भवेत् । ततस्ते-नापि सम्बन्धोनापेक्षः स्यात् । अपेक्ष्यते च ततो नास्य शब्दे स्वा(भा)विकं सामर्थ्यं ।[6] तथा चेदमपि शक्यमनुमातुं । ये समयाक्षेक्ष [? पेक्ष]प्रवृत्तयस्ते सर्वत्र यथासमय-मनिवारितप्रसराः साक्षादेव प्रतिपादका भवन्ति । यथाकायविज्ञप्त्यादयः । त[7]था चापशब्दा अपि समयापेक्षप्रवृत्तय इति सिद्धमेषामव्य(व)धानत एवार्थप्रति-

न व्यर्थं संस्कृत[7]शब्दव्युत्पत्त्यर्थमिति चेत् । कोऽयं शब्दानां
संस्कारः । नह्येषां प्रज्ञाबाहुश्रुत्यादिकं संस्कारं पश्यामो, नाप्येषामेकान्तेन
श्रव्यता । नाप्यर्थप्रत्यायने कश्चि[8]दतिशयः । न धर्म्मसाधनता
मिथ्यावृत्तिचोदनेभ्यः संस्कृतेभ्योप्यधर्म्मोत्पत्तिः । अन्येभ्योपि
15a विपर्यये धर्म्मोत्पत्तेः । शब्दस्य सुप्रयोगादेव स्व[9]र्गमोदनघोषणा[1]
वचनमात्रं (।) न चैवंविधानागमान( ा ) द्रियन्ते युक्तिज्ञाः । न च दानादि

---

पादकत्वमिति । विपर्ययदर्शनाच्चेत्युपचयान्तरं । तथाहि वृक्षोग्निरुत्पलमित्युक्ते[8]
ऽव्युत्पन्नधियो वालाः प्रश्नोपक्रमं सन्तिष्ठन्ते । कोयं वृक्ष इत्यादिना । ते चान्यस्य
66b व्युत्पादनोपायस्याभावादपशब्दैरेव व्युत्पाद्यन्ते रुक्ख अग्गी उप्पलमिति ॥ त[9]देव-
मत्रासाधव एव वाचका न साधवः सन्तोपीति विपर्ययो दृश्यते (।) अथ प्रतिपद्यसे
धर्मसाधनता शब्दसंस्कारो यथोक्तं ।

शिष्टेभ्य आगमात् सिद्धं साधनो धर्मसाधनं[1]
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधव (४२) इति । तथा
"मन्त्र( ो ) हीनः स्वरतो वर्णतो (वा) मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्[1] ।[2] (४३)

ते सुरा हेऽलयो (हे)ऽलय इत्युक्तवंतः पराबभूवुः । एकोपि शब्दः सम्यक्प्रयुक्तः सुकृ-
तिनां लोकङ्गमयति । आहिताग्निरपशब्दमभिधाय प्रायश्चित्तीयामिष्टिं नि[3]र्वपे-
(दि)त्यादि ।" (महाभाष्ये आह्निके १) इदमपसारयति न धर्मसाधनता (14b9)
शब्दानां संस्कार इति वर्तते किङ्कारणमित्याह । मिथ्यावृत्तिचोदनेभ्य (14b9)
इत्यादि । मिथ्यावृत्तिश्चोद्यते यैरि[4]ति कार्यं । यथा हृद्यस्याभिनवविद्रुमाङ्कुरप्रकरा-
भिरामकिशलयमञ्जुमञ्जरीराजीविराजिततरोरशोकवनस्पतेरधः शयितस्य द्विज-
न्मनो नीलनीरज[5]नीलतातिशायिना मण्डलाग्रेण शिरश्छिन्त्वेत्युक्तेपि भवत्येव ब्रह्मह-
त्यया सम्बन्धः प्रयोजकस्य । अन्येभ्य इत्यसम्भूतेभ्यो विपर्ययेण सम्यक्त्ववृत्तिचोद-
ने[6]न । यथा अस्स बम्भणस्स गावी दीअदि । सर्वञ्चेदमप्रमाणत्वाद्वचनमात्रं
भवताविमत्याकूतवानुपचयमाह । शब्दस्य सुप्रयोगादेवेत्यादि (14b9) । एवं
विधानित्यप्रमा[7]णकान् ।

ननु च "प्रतिष्ठिते भूप्रदेशे चैत्यङ्कारयति ब्राह्मचं पुण्यं प्रसवति कल्पं स्वर्गेषु
मोदत" इत्यादावपि प्रमाणाभावादयं तुल्यः प्रसङ्गो भवतामपि । न तुल्यो[8]यस्मादत्र

---

[1] व्याकरणमहाभाष्ये पस्पशाह्निके ।

धर्म्मसाधनचोदनाशून्यकेवलशब्दसुप्रयोगान्नगपातं इति ब्रुवाणस्य कस्यचिन्मुखं वक्रीभवति । तस्मान्न[1] संस्कृतो नाम कश्चिच्छब्दः ।[१]

शिष्टप्रयोगः संस्कार इति चेत् । के शिष्टाः(।) ये वेद्यतादिगुणयुक्ताः । कः पुनरेषां गुणोत्कर्षानपेक्षोऽलीकनिर्बन्धो यत्तेऽमूनेव शब्दान् प्रयुञ्जते नापरा[2]न् । न चात्र कश्चिच्छब्दे(ऽ)पवाह्यः साक्षी यत इतीदमेव निश्चिनुमः । प्रयुञ्जते नाम शिष्टा नन्वेवं वयं गुणातिशयमपश्यन्तः संस्कारं केषां चिच्छब्दानामनुमन्यामहे। तदन्वाख्यानं यत्नं वा गुणा[3]तिशयाभावात् वेदरक्षादिकथाप्रयोजनमेव । तत्स्थामवस्थापि ( ? ) नः । सत्यपि गुणातिशये न करणीय एवान्वाख्याने यत्नः । तत्स्वभावस्यान्यतोपि सिद्धेः *प्राकृतापभ्रंशद्रमि*[4]*डान्ध्रादिभाष*( ा )वत् । न हि प्रतिदेशं भाषाणां

---

विषयद्वयपरिशुद्धिः परिनार्था(?)विसम्वादश्चास्तीति तृतीयेपि राशावाहितपरितोषाः प्रेक्षावन्तः प्रवर्त्तन्ते । नत्वेवं भवन्मतेऽनन्तरोदितद्वयमपि[3] प्रमाणव्याहतत्वात् 67a
प्रमाणव्याहतिश्चानन्तरमेवावेदिता । तस्माद्दरिद्रेश्वरस्पर्धासमानमेतत् (।)

विदितवेद्यादिगुणप्रयुक्ता (15a2) इत्यन्तर्भावितभावप्रत्यययो[ ? य ] निर्देश[1]:। विदितं वेद्यं हेयोपादेयत्वं यैस्ते तथोक्ताः। आदिग्रहणात् करुणादिपरिग्रहः । अमूने(5a2)व संस्कृतानपरानसंस्कृतान् । एतदुक्तम्भवति (।) शब्दो हि व्यवहारोर्थप्र[2]त्यायनफलः । तच्च यथा संस्कृतेभ्यः सङ्केतवसा[?शा] त्सम्पद्यते तथाऽसंस्कृतेभ्योपीति किमस्थानेऽभिनिविष्टाः शिष्टाः । अत एव च मन्ये प्रेक्षावद्भ्योन्यत्वादनुगता[3]र्थमेवं नामामीषामिति । अथवा किमस्माकमर्हषितिः(?) प्रत्याख्यानैः ॥ ते अमूनेव प्रयुञ्जते नापरानित्यत्रैव निश्चयाभावात् । यदाह (।) न चात्र श[4]ब्दे परोक्षः साक्षी यतः साक्षिण इदमेवामूनेव प्रयुञ्जते नापरानिति निश्चिनुमः (15a3) ।

ननु चोक्तन्तदन्वाख्यानस्य प्रयोजनं रक्षोहागमलघ्वसन्दे[5]हा (महाभाष्येआह्निके १) इति । तत्कथं गुणातिशयाभावादित्युच्यत इत्याह। वेदरक्षादिकञ्चाप्रयोजनमेवातत्समयस्थायिन(15a4)स्ताथागतस्य । न्यायानुपायित्वात् । तत्स्वभा[6]वस्य (15a4) साधुशब्दरूपस्य। अन्यतोपीति (15a4) वृद्धप्रवादपारम्पर्यात् । एतदेव दृष्टान्तोपक्रमं व्यनक्ति। प्राकृतेत्यादिना (15a4) ।

---

[१] अत्र वाचस्पतिः (न्या० वा० ता० पृ०)—"तदेवं व्यवस्थिते न्यायमीमांसापरिशीलनविकलानां बाह्यतराः प्रलापा उपेक्षणीयाः ।"

किञ्चिल्लक्षणमस्ति । अथ च सम्प्रदायः सात्ता ( ? ) ल्लोकस्तथैव प्रति-
पद्यते तासाञ्च प्रयोगभ्रंशं । तथा संस्कृतानां शब्दानां प्रतीतिर्भ-
विष्य[5]तीति जडप्रतिपत्तिरेवैषा या शब्दानां लक्षणे प्रवृत्तिः ।

अवयवविपर्ययेपि यदि तेषां वचनानां सम्बन्धप्रतीतिर्न न विप-
र्ययो नाप्यर्थाप्रतीतिः सामर्थ्यात् । न ह्यत्र कश्चित्सम[6]यः प्रत्यायना-
विशेषेप्येवमेवावयवाः प्रयोक्तव्या इति । स एव तेषां क्रमो यथावस्थिते-
भ्योऽर्थप्रतीतिर्भवतीति न विपर्ययात्प्रतीति ( : ) तत आनुपूर्वीप्रतिपत्त्या
प्रती[7]तिरिति चेत् । नाप्रतीयमानसम्बन्धेभ्य आनुपूर्वीप्रतिपत्तिः ।
येषां शब्दानां कश्चित्सम्बन्धो जायते इदमिह सम्बध्यत इति । तेषु विदित-
सम्बन्धेषु कः कस्य पूर्वोऽपरो वा क्रमो येन क्रमेण व्य[8]वस्थाप्येरन् ।
सम्बन्धप्रतिपत्तौ स एव तेषां क्रमो यो यथावस्थितानां सम्बन्धः प्रतीयते ।
नहि वाक्येषु पदानां क्रमनियमः कश्चित् यथा राज्ञः पुरुषः पुरुषो राज्ञ
इति । यावद्भि (:) पदै[9]रर्थपरिसमाप्ति ( : ) तदैकं वाक्यं यथा देवदत्त
गामानय कृष्णामित्यत्र पदानां यथाकामं प्रयोगेपि नार्थप्रतीतौ विशेष
15b इति कश्चित्क्रमाभिनिवेशः । प्रतिपादितञ्च प्रतिज्ञावचनान्तरेणा[10]पि
यथा प्रतीतिर्भविष्यतीति प्रतीयमानार्थस्य शब्दस्य प्रयोगेऽतिप्रसङ्गः

---

इ(त्)थं शा(ि)ब्दकस्योन्मत्तकतामुपदर्श्याधुना भा[7]रद्वाजस्याह ।

अवयवविपर्ययेपीत्यादि (15a6) । सम्बन्धप्रतीतिरिति सम्बन्धः परस्परमुप-
कार्योपकारकभावः । सामर्थ्याद्विवक्षितप्रतिपादन इति शेषः ।[8] अथ स्यादक्षपाद-
सिद्धान्तनीतिपालनाय न प्रतिज्ञादीनां क्रमव्यत्ययः क्रियत इत्यत्राह । नह्यत्र
67b कश्चित्समयः (15a6) सिद्धान्तो नियमो वा प्रमाणोपेत इत्यप्याह । न[9]पर आह ।
न विपर्ययात्प्रतीतिः (15a7) साध्यस्य । किन्तु ततो विपर्ययादानुपूर्व्या प्रतीति-
रिति । अस्य प्रतिषेधः । नाप्रतीयमानसम्बन्धेभ्य आनुपूर्वी प्रतीतिरिति (15a8) ।[1]
येषामित्यादिनै (15a8) तदेव व्याचष्टे ।। अपि च प्रतिज्ञोपनयनिगमनानां
पूर्वमेवास्माभिः साधनवाक्ये प्रयोगः प्रतिक्षिप्तः । तत्कुतस्तत्कृतो विपर्यय इत्येत-
त्कथयति[2] (।) प्रतिपादित (15a10) मित्यादिना । प्रतिज्ञाग्रहणमुपलक्षणार्थं ।
अथ सामर्थ्यलभ्यापि प्रयुज्यते तदातिप्रसङ्ग इत्येतदाह । प्रतीयमानार्थस्य च
प्रयोगेति (15b1) प्रसङ्गः सा[3]धर्म्यवति प्रयोगे वैधर्म (?र्म्य) स्यापि प्रयोग-
प्रसङ्गः । न चेष्यते । अर्थादापन्नस्य स्वशब्देन पुनर्वचनञ्चेति (न्या० सू० ५।२।१५)
निग्रहस्थानवचनात् । पक्षधर्मान्वयव्यतिरे[4]केषु तर्हि प्रतिज्ञाद्यभावेपि क्रमनियमो-

परिशिष्टेषु च सम्बन्धं प्रदर्श्य धर्म्मिणि भावः प्रदर्श्येत धर्म्मिणि भावं प्रदर्श्य सम्बन्धः प्रदर्श्येतेति न नियमः कश्चिदुभयथापि[1] प्रतीत्युत्पत्ते-रित्युक्तं । अप्रतीयमानसम्बन्धेषु च पदेषु न तेभ्य आनुपूर्व्या अपि प्रतीतेरिति नेदमपार्थकाद्भिद्यत इति नाप्राप्तकालं पृथग्वाच्यं स्यादिति ॥

*हीनमन्यतमेनाप्यवयवेन न्यू[2]नं* ( न्या० ५।२।१२ ) । यस्मिन्वाक्ये "प्रतिज्ञादीनामन्यतमोवयवो न भवति तद्वाक्यं हीनं साधनाभावे साध्या-सिद्धेः"[१] । न प्रतिज्ञान्यूनं हीनं तदभावे प्रतीतिभावादिति प्रतिपादितं । हीनमेव तत् न्यूनतायामपि नि[3]ग्रहादित्यपरः । यः प्रतीयमानार्थमनर्थकं शब्दं प्रयुङ्क्ते स निग्रहमर्हेत् नार्थोपसंहितस्याभिधातेति । असमीक्षिता-भिधानमेतत् । अतएव च प्रतिज्ञाया न साधनाङ्गभाव इति[4] ॥

---

भविष्यतीत्यत आह । परिशिष्टे (15b1) ष्वित्यादि । अप्रतीयमानसम्बन्धपक्षे दोषान्तरं ब्रूते (।) नेदमपार्थकाद् भि[5]द्यत (15b2) इति न पृथग्वाच्यं स्यादिति ॥४॥

यस्मिन्वाक्ये प्रतिज्ञादीनान्निगमनपर्यन्तानामन्यतमोऽवयवो न भवति । तद्वा-क्यं हीनं (15b3) निग्रहस्था[6]नत्वे कारणमाह । साधनाभावे साध्यासिद्धे-रिति (15b3) । इदन्निराकरोति (।) न प्रतिज्ञादीनामित्यादिना (15b3) । प्रतिज्ञाग्रहणमुपलक्षणार्थं तेनोपनयनिगमनयोरपि[7] परिग्रहः । उद्योतकरस्य मतमुप-न्यस्यति । हीनमेव तत् (15b3) । प्रतिज्ञान्यूनं । तस्याः प्रतिज्ञायाः न्यूनतायामपि निग्रहादिति अस्यायुक्ततामाह । यः साधनसा[8]मर्थ्यात्प्रतीयमानार्थमनर्थकं शब्दं साध्याभिधायिनं साधने प्रयुङ्क्ते स निग्रहमर्हेत् (15b4) । तथा हि शब्दस्या-नित्यत्त्वविचारे प्रस्तुते यदा ब्रवीति । कृतकानामनित्यत्वं[9] दृष्टङ्कृतकश्च शब्द 68a
इति । तदा वचनद्वया देवसाध्यार्थः प्रतीयत इति निरर्थकम्प्रतिज्ञावचनं । नार्थोपसं[1]-हितस्य युक्तियुक्तस्य पक्षधर्मसम्बन्धमात्रस्याभिधानेत्यसमीक्षिताभिधानमेत(15b4) द्वार्तिककारस्य । अत एव चेति (15b4) यतः प्रतीयमानार्थे शब्दे प्रयुक्ते[2] निग्रहमर्हति । तदत्राविद्धकर्णः प्रतिबन्धकन्यायेन प्रत्यवतिष्ठते । यद्येवङ्कृतकश्च शब्द इत्येतदपि न वक्तव्यं किंकारणनी (?निमित्त) मनित्यत्व-मित्येतेनैव शब्दे[3]पि कृतकत्वमनित्यत्वञ्चोभयं प्रतिपद्यते । यस्मात्पूर्वमपि शब्दे कृतकत्वम्परेण प्रतिपन्नमेव करणाच्छब्दोपि बुद्धौ व्यवस्थितः । अतोन्वय-वा[4]क्येन स्मृतिमात्रकमुत्पाद्यते । अप्रतिपन्नकृतकत्त्वस्य पुनः कृतकश्च शब्द इत्ये-

---

[१]न्या० वा० पृ० ५५६ ।

*हेतूदाहरणाधिकमधिकं* ( न्या० ५।२।१३ )। "एकेन कृतकत्त्वादित्य-स्यानर्थक्यमिति तदेतन्नियमाभ्युपगमे वेदितव्यं"[1] । यत्रैकसाधनवाक्य-प्रयोगपूर्वको विचारस्तत्राधिकाभिधानमनर्थकमिति[5] निग्रहस्थानं । प्रपञ्च-कथायान्तु न कश्चिद्दोषो[2] नियमाभावादिति ॥

*शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्* ( न्या० ५।२।१४ )। "शब्दपुनरुक्तमनित्यः शब्दोऽनित्य(:) शब्द इति । अर्थ[6]पुनरुक्तमनित्यः

---

तस्मादपि नैव भवति। यद्वा कृतकः शब्द इत्येतावद्वक्तव्यं। कृतक[5]त्वस्य त्वनित्यत्वे-नाविनाभावित्वं परस्य प्रसिद्धमिति शब्देप्यनित्यत्वं प्रतिपद्यत इति तेनानुकूल-मेवाचरितं। तथा हि यदि वादिना कथञ्चिन्निश्चि[6]तम्भवति प्रतिपन्नमनेन वादिना कृतकत्वं शब्द इति तदा नैव तेन पक्षधर्मोपसंहारः कर्तव्यो निष्फलत्वात्। प्रति-बन्धमात्रन्तु प्रदर्शनीयं। अथ तथा न[7] निश्चितं। तथापि यद्ययं परः पक्षधर्मोपसंहारे मया कृते तस्यासिद्धिञ्चोदयिष्यति। तदाहन्तां प्रत्ययभेदभेदित्वादिभिरुपायैः प्रतिनिवारयिष्यामि स्व[8]यमेव वा ऽचोदित एवाशङ्क्यैतच्चेतस्याधाय पक्षधर्मत्वमुप-संहर्तव्यमेव कृतकश्च शब्द इति। यदाप्येवं वादी निश्चितवान् कृतकत्वस्यानित्यत्वे-
68b नाविनाभा[9]वित्वं परस्य प्रसिद्धमिति तस्यामप्यवस्थायां कृतकः शब्द इत्येतावेदव वक्तव्यं। यथोक्तन्

तद्भानहेतुभावौ हि दृष्टान्ते तदवेदिनः
ख्याप्यते विदुषाम्वाच्यो हेतुरे[1]व हि केवल इति ॥(४४)॥

तदेतन्नियमाभ्युपगम इत्यधिकं निग्रहस्थानं। विशिष्टे विषये स्थापयति तञ्च विशिष्टं विषयमाह। यत्रेत्यादिना (15b5)। ननु चेदं निय[2]माभ्युपगमे वेदि-तव्यमिति भाष्यकारेणैवोक्तं। तत्किमत्र दूषणमाचार्येणोक्तं सत्यन्न किञ्चिदुक्तं। आ(चा)र्येण तु पक्षिलोक्तमेवनूद्यतेऽभ्यनुज्ञानार्थम् ॥४॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तमित्यस्यापवादमाह अन्यत्रानुवादादिति। अनु-वादो निगमनं। अनुवादो हि न पुनरुक्तव्यपदे[4]शं लभते। शब्दाभ्यामर्थविशेषोत्पत्तिः। यस्मात्साध्यनिर्देशः। प्रतिज्ञासिद्धनिर्देशो निगमनमित्युक्तं। पुनः शब्दश्च नानात्वे दृष्टः। पुनरि[5]यमचिरप्रभा निश्चरतीत्यप्यावेदितमेव। यद्येवन्तत्र तर्हि पुन-

---

[1]न्या० भा० पृ० २६२।

[2]न्या० मं० पृ० ६५०—"एतच्च कीर्तिनाऽप्येवं कथितं प्रपञ्चकथायां तु न दोष इति।"

शब्दो निरोध-धर्म्मको ध्वान इति ।"[1] अत्र न शब्दपुनरुक्तं पृथग्वाच्यमर्थपुनरुक्तवचनेनैव गतत्त्वात् । न ह्यर्थभेदे शब्दसाम्येपि कश्चिद्दोषो यथा (—)

*हसति[7] हसति स्वामिन्युच्चैरुदत्यभिरोदिति (,)*
*कृतपरिकरं स्वेदोद्गारं प्रधावति धावति ।*
*गुणसमुदितं दोषापेतं प्रणिन्दति निन्दति (,)*
*धनलवपरिक्रीतं यन्त्रं प्रनृत्यति नृत्यति ॥(२)*

यथा वा, यद्यस्मिन्सति भवति भ[8]वति न भवति ( , ) न भवति तत्तस्य कार्यमितरत्कारणमिति । गम्यमानार्थे पुनर्वचनमपि पुनरुक्तं

---

रुक्ततायाः प्राप्तिरेव नास्तीति किमर्थमयमपवादः प्रारभ्यते। सत्यमेवमे[6]तत्। त एव तु प्रकृष्टतार्किकाः प्रष्टव्याः। कथमेतदिति। अस्माकन्तु किं परकीयाभिर्गृहचिन्ताभिश्चिन्तिताभिरित्यलम्प्रसङ्गेन। अत्र चेदमपि द्वितीयसूत्रम[7]स्ति अर्थादापन्नस्य स्वशब्देन पुनर्वचनमिति (न्या० सू० ५।२।१५) तदाचार्येण नोपन्यस्तमुपलक्षणार्थत्वात्। तद्भाष्य(म)पक्षिप्य निराकरिष्यति। गम्यमानार्थं पुनर्वचनमपी[8]त्यादिना (15b9)। अत्रेत्यादिना (15b7) दूषणमारभते। एतदुक्तम्भवति। यत्र शब्दसाम्येप्यर्थो न भिद्यते तत्रार्थपुनरुक्ते[9]न गतं यत्र तु शब्दसाम्येप्यर्थभेदस्तत्र शब्दपुनरुक्ततायामपि न किञ्चित्कृतं। किमस्त्ययमीदृशः सम्भवो यच्छब्दपुनरुक्ततायामप्यर्थभेदोस्तीत्यत आह। यथा हस[1]ति हसतीत्यादि (15b7)। अत्र हि पूर्वो हसतिशब्दः सप्तम्यन्तो द्वितीयश्च तिङन्त इत्यर्थभेदः। एवमुत्तरत्रापि। काव्य ईदृशः सम्भवो न तु वाद इत्याशङ्कायामुदाहर[2]ति। यथा चेत्यादि (15b8)। ननु चेहाप्यर्थभेदवच्छब्दो[?ब्द]भेदोप्यस्ति सुबन्ततिङन्ततया। सत्यन्न केवलमत्रापि। अत्राप्यनित्त्यः शब्दोऽनित्यःशब्द इत्यत्रास्त्येव शब्दभेदः स्वलक्ष[3]णभेदात्। अन्यथा न क्रमभावि श्रवणं स्यात्। समानश्रुतिसमाश्रयमिह पौनरुक्त्यं यदि व्यवस्थाप्यते तदत्रापि तुल्यमेव। अर्थभेद एवायं। क्रि[4]याभेदादिवाच्यभेदात्। तद्बलकल्पित एव हि पदभेदः। गम्यमानार्थं पुनर्वचनमपि पुनरुक्तमिति (15b9) द्वितीयम्पुनरुक्तलक्षणसूत्रमुपलक्षयति। अस्य[5] चोदाहरणं वात्स्यायनेन न्यायभाष्य उक्तं। साधर्म्यवति प्रयोगे वैधर्म्यस्य। आचार्यस्तु प्रतिज्ञायामप्येतत्समानमित्यागूर्य प्रतिज्ञायाः साधनवा[6]क्येऽनुपन्यासं प्रतिपादयितुकामो वक्रोक्त्या प्रतिज्ञावचनमेवो-

69a

---

[1]न्या० भा० पृ० २६२।

नियतिपदप्रयोगे साधनवाक्ये यथा प्रतिज्ञावचनमिति । अथ पुनरुक्तेनैव
गतार्थत्त्वान्न पृथग्वाच्यं[9] अयमपि नियतसाधनवाक्य एव दोषो वक्त-
व्यो न विस्तरकथायां व्याचक्षाणो हि कदाचिदसम्यक्श्रवणप्रतिपत्ति-
शङ्कया साक्षिप्रभृतीनां पुनः पुनर्ब्रूयादिति न तत्र किञ्चिच्छलं । नाविषया-
दिति चे[10]त् । नायङ्गुरुर्न शिष्य इति न यत्नतः प्रतिपादनीयो येन पुनः
पुनरुच्यत इति । पुनर्वचने निग्रह एवेति चेत् । न (।) साक्षिणां यत्नेन प्रति-
16a पाद्यत्वात् । तदप्रतिपादने दोषाभिधानात् । प्रतिपा[11]दने दोषाभिधानात् ।

---

दाहरणत्वेनोपन्यस्यति । नियतपदप्रयोगे साधनवाक्ये यथा प्रतिज्ञावचनमिति
(15b9) नियतानां[7] पदानां प्रयोगो यस्मिन्निति कार्यं । इदम्प्रतिक्षिपति
अर्थपुनरुक्तेनैव गत(ार्थ)त्वान्न पृथग्वाच्यमिति । यथा ह्येकशब्दप्रतिपादितेर्थे
69b तत्प्रतिपादनाय पर्या[8]यशब्दान्तरमुपादीयमानमनर्थकन्तथा सामर्थ्यगम्येप्यर्थ इति
अर्थपुनरुक्तेनैवास्य सङ्ग्रह इति समुदायार्थः । क्व पुनरेतत्प्रति[1]ज्ञादिवचनमर्था-
पत्तिलभ्यं पुनरुक्तं सन्निग्रहस्थानम्भवतीति प्रश्ने नियतप्रयोगे साधनवाक्ये (15b9)
इत्येतदेवम्पक्षेण विवृणोति । अयमपि दोषो गम्यमानार्थपु[2]नर्वचनकृतः साधनवाक्य
एव नियतपदप्रयोग इति वर्तते । इदमुक्तम्भवति । यदा प्राश्निकाः शब्दार्थप्रमाण-
प्रविचयनिपुना [?णा]: प्रेक्षावन्तोत्यं[3]तमवहितमनसश्च भवन्ति । प्रतिवाद्यपि
तथाभूत एवेति वदन्ति यदन्तरेण न साध्यसिद्धिः तदेव प्रयोक्तव्यं । नाभ्यधिक-
मिति तदायन्दोषो नान्यथा[4] यस्मात्करुणापरतन्त्रचेतसोऽनिबन्धनवत्सलाः प्रतिवादि-
नमतिद[?दु]र्ल्लभमिव शिष्यं न्यायवर्त्मावतारयितु यतन्ते तत्र पुनर्वचनमपि न
दोषाय । ए[5]तदेवाह । व्याचक्षाणो हि वादी साक्षीप्रभृतीनामसम्यक्श्रवणप्रतिपत्ति-
शङ्कया करणभूतया सम्यक्श्रवणप्रतिपत्यर्थम्पुनः पुनर्ब्रूयादपीति (15b10) । ना-
विषय[6]त्वादिति परः । इदमेव व्याचष्टे नायम्वादी गुरुः (15b11) प्रतिवादिनः ।
न शिष्यः प्रतिवाद्यपि वादिनः । द्वयोरपि परस्परजिगीषया व्यवस्थानादिति ।
तस्मात्[7] न वादिना प्रतिवादी यत्नतः प्रतिपादनीयः । ने(15b11)त्याद्याचार्यः ।
यदि नाम प्रतिवादी न प्रतिपाद्यते यत्नेन । साक्षिणस्त्ववश्यं यत्नेन प्रतिपाद्यास्त-
70a द्बोधना[8]देव हि वादिनो जयोन्यथा च पराजय इति कथं साक्षिण एव न प्रति-
पादयेत (?त्) किञ्चावश्यं साक्षिवत्प्रतिवाद्यपि प्रतिपाद्यः । कस्मात्तदप्रतिपादने
दोषाभि[1]धानात् । तच्छ(ले)न साक्षिप्रभृतयः प्रत्यवमृश्यन्ते यदि साक्षिप्रभृतयो न
प्रतिपाद्या भवेयुस्ततो यद् भवद्भिः परिषत्प्रतिवादिभ्यान्त्रिरभिहितमविज्ञात[2]म-
विज्ञातार्थं निग्रहस्थानमुक्तं (न्या० सू० ५।२।१६) । तद्विरुद्धचत इत्यर्थः ।

प्रतिपाद्यस्य शिष्यत्त्वात्, विजिगीषुवादप्रतिषेधत्वात् त्रिरभिधानवचनात्। पुनर्वचनप्रसङ्गे समयनियमाभावाच्च। न चेदमधिकाद्भिद्यत इति न पृथग्वाच्यं। विनियतपदप्रयोगे[1] हि साधनवाक्ये आधिक्यदोष इति पुनर्वचनेपि गतार्थस्याधिक्यमेव पदस्येति। प्रपञ्चकथायामपि कथितैकार्थसाधनाधिकरणायालोनार्थसाधनेप्सायां नाना साधनेप्सां वा श्रोतुर्हेत्वादिबाहुल्यस्य पुनर्वच[2]नस्य दोषत्त्वात्। प्रतीतप्रत्ययाभावाद्धेत्वादिबा-

---

यच्चोच्यते नायं शिष्य इति तदसिद्धं। प्रतिपाद्यस्य शिष्यत्वात् (16a1)। तत्वज्ञानार्थतया प्रतिपाद्य एव[3] शिष्योन्यस्य तल्लक्षणस्याभावात्। प्रतिवादी च तथाभूतः कथं न शिष्यः। किमुच्यते नैवासौ प्रतिवादी तत्वज्ञानार्थास्पर्धया व्युत्थितत्वादिति। [4]तदयुक्तं। पूर्व्वञ्जिगीषुवादप्रतिषेधात् (16a1)। एवमपि नैवासौ यत्नप्रतिपाद्यस्त्रिरभिधाननियमस्य महर्षिणा कृतत्वादित्यत आह। त्रि[5]रभिधान (16a1)वचनादित्यादि। अनेनैतद्दर्शयति। यद्वक्ष्यति। यदि तावत्परप्रतिपादनार्था प्रवृत्तिः किन्त्रिरभिधीयते तथा तथा स ग्राहिणीयो[6] यथास्य प्रतिपत्तिर्भवति। अथ परोपतापनार्था तथापि किं त्रिरभिधीयते। साक्षिणाङ्कर्णे निवेद्य प्रतिवादी कष्टाप्रतीतद्रुतसंक्षिप्तादिभिरुपद्रो[7] तव्यो यथोत्तरप्रतिपत्तिविमूढस्तूष्णीम्भवतीति। न चेद(16a1)मिति शब्दार्थयोः पुनर्वचनं। गम्यमानार्थपुनर्वचनं च। अभेदमेव साधयति। विनिय[8]ते(16a1)त्यादिना। आधिक्यं (16a2) हेतूदाहरणयोर्दोषः। एकेन कृतत्वादितरस्यानर्थक्यमिति वचनात्। पुनर्वचनेपि गतो ज्ञातः पूर्वेणैव शब्देनार्थो यस्यो[9]त्तरस्य पदस्य तदेवमुक्तं।[7] तस्याधिक्यमेव दोष इत्यधिकृतं। 70b
किम्पुनर्नियतपदप्रयोगेऽप्यन्दोष इत्युक्तमिति चेदाह। प्रपञ्चकथायामदोष (16a2) इत्यभिसम्बन्धः। क[1]स्य हेत्वादिबाहुल्यस्य (16a2)। पुनर्वचनस्य च। आदिशब्देनोदाहरणबाहुल्यग्रहणं। कीदृश्यामनिरूपितैकार्थसाधनाधिकरणायां अर्थः साध्यः। अर्थ्यत इ[2]ति कृत्वा साधनं। हेतुरधिकरणन्धर्मी। अर्थसहितं साधनमर्थसाधनं। मध्यपदलोपात्। एकञ्च तदर्थसाधनञ्च तथोक्तम्। तस्याधिकरणन्तदनिरूपि[3]तमेकार्थसाधनाधिकरणं यस्यां प्रपञ्चकथायां प्रतिवादिना धर्मिणो जीवशरीरादेर्नैको धर्मो नैरात्म्यादिषु प्रमातुमिष्टोऽपित्वनेकः क्षणि[4]कत्वानात्मत्वानीश्वरकर्तृत्वादिस्तथा नैकेनैव हेतुना किन्त्वनेकेनापि तस्यामित्यर्थः। एतदेव यथाक्रमं ब्रूते। नानार्थसाधनेप्सायां नाना[5]साधनेप्सायां वा श्रोतुरिति (16a2) पूर्व्वकः साधनशब्दो भावसाधनत्वात्सिद्धिवचनः। उत्तरस्तु करणसाधनत्वाद्धेतुवचनः। तस्माद्धेत्वादिबाहु[6]ल्यं वचनबाहुल्यं साधनेन विनियतपदे दोषः। कस्मा(त्)

हुल्यं वचनबाहुल्यञ्च साधनदोष इति। आधिक्यपुनर्वचनयोस्तुल्यदोष इति सङ्ग्रहवचनं न्याय्यं, दोषाभावादेव गुणाभावात्। एवं प्रकाराणां भेदानां वचने चा[3]तिप्रसङ्गादित्युक्तं। पर्यायशब्दकल्पो ह्युपरोक्के तु प्रतिपादिते विषये वर्त्तमानः प्रतिपाद्यानि (? पाद्यो) विशेषाभावात्। अर्थः पुनः प्रतिपादनान्न भिद्यते। यत्पुनरुक्तमनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशे[4]षोपपत्तेः यथा *हेत्वपदेशात्प्रतिज्ञायाः पुनर्यचनं निगमनमिति* ( न्या० ११।१।३९ )। प्रतिज्ञाया एवङ्गम्यमानार्थाया वचनं पुनर्वचनं किं पुनरस्याः पुनर्वचनमित्ययुक्तं निगमनं ॥

*विज्ञातस्य पर्षदा त्रि[5]भि(त्रि)रभिहितस्याप्रत्युच्चारणमननुभाषणं*(न्या० ५।२।१६)। "विज्ञातवाक्यार्थस्य पर्षदा प्रतिवादिना त्रिभिर(त्रि)भिहितस्य यदप्रत्युच्चारणं तदननुभाषणन्नाम निग्रहस्थानमप्रत्युच्चारयन् किमाश्रयं पर[6]पक्षप्रतिषेधं कुर्यादिति"[1]। उत्तरेणावसानान्नेदं निग्रहस्थानमिति चेत्। स्यादेत-

---

प्रतीताय्याभावात्। प्रत्य तुल्यो दोष इति कृत्वा सङ्ग्रह एव न्याय्यः। अधिकमेव वा वक्तव्यं पुनरुक्त[7]मेव चेत्यर्थः। अनयोरेकस्मिन्द्वितीयस्यान्तर्भावात्। कथं पुनः शब्दपुनरुक्ते ऽधिकस्यान्तर्भाव इत्याह। पर्य्यायशब्दकल्पो (16a4) हृचपरो द्वितीयो हेतुरेकहेतुप्र[8]तिपादिते विषये प्रवर्त्तमानः (।) किं कारणं (।) प्रतिपाद्यस्य विशेषाभा-
71a वात्। अर्थस्य पुनरुक्तन्तर्हि कथमधिकेन्तर्भवतीत्याह अर्थः पुनः प्रतिपादना[9]न्न भिद्यत इति॥ अर्थशब्देनार्थपुनरुक्तमुपलक्षयति। पुनः प्रतिपाद्यते अनेनेति पुनः प्रतिपादनं हेतूदाहरणाधिकमेव। इदमुक्तम्भवति (।) स्फुटमेवास्य उदा[1]हरणाधिकेन्तर्भावः। तथाहि साधर्म्यवति प्रयोगे वैधर्म्योदाहरणस्याप्रयोगोऽर्थपुनरुक्तस्योदाहरणमुक्तं। यत्पुनरुक्तमेवाद्यपवादप्रतिषेधः सुज्ञानः ॥०॥[2]

विज्ञातो वाक्यार्थो यस्य त्रिरभिहितस्य तत्तथा। विशेषणसमासो वा विज्ञातश्चासौ वाक्यार्थश्चेति त्रिरभिहितस्य वादिनेति प्रतिपत्तव्यं॥ प्रतिवादिना प[3]दप्रत्युच्चारणमिति सम्बन्धनीयं। त्रिवचनं सकृदभिहितस्याननुभाषणेपि न निग्रह इति ज्ञापनार्थं। अप्रत्युच्चारणञ्च शब्दद्वारेणार्थद्वारेण[4] वा। निग्रहस्थानत्वे कारणमाह। अप्रत्युच्चारयन् किमाश्रयम्परपक्षे प्रतिषेधं ब्रूयादि(16a7)ति न विषयन्दूषणाभिधानन्नास्तीत्यर्थः॥ इदन्त्वयोक्त[5] मति ङकृत्वा दूषणम्वाच्यं। एवन्दूषणवाक्य

---

[1] न्या० भा० पृ० २६२।

दुत्तरेण गुणदोषवता मूढामूढत्वं गम्यत इति किमुच्चारितेन। अस्ति हि कश्चि-दुत्तरेण समर्थो न प्र[7]त्युच्चारणेनासौ तावता निग्रहमर्हेदिति। नोत्तरविषया-परिज्ञानाद्यद्ययन्न प्रत्युच्चारयति निर्विषयमुत्तरं प्रसज्येत। अथोत्तरं ब्रवीति कथं नोच्चारयति। तदिदं व्याहतमुच्यते नोच्चारयति[8] उत्तरञ्च ब्रवीतीति। अप्रतिज्ञानाच्च न चेदं न प्रतिज्ञायते पूर्वं सर्वमुच्चारयितव्यं पश्चादुत्तरमभि-धातव्यमिति। अपितु यथा कथञ्चिदुत्तरं वाच्यमुत्तरञ्चाश्रयोऽभावेऽयुक्त-मिति युक्तमप्रत्युच्चारणान्निग्र(ह)स्था[9]नमिति। यदि नाम वादी स्वसाध-नार्थविवरणव्याजेन प्रसङ्गादपरं घोषयेद्विवादास्पदञ्च जिज्ञासितमर्थमात्र-मुक्त्वा प्रतिज्ञादिष्वर्थविशेषपरंपरयाऽपरानर्थानुपक्षिप्य कथां विस्तारये[10]-

---

मपि साधनवादिना प्रत्यनुभाष्य परिहर्तव्यं। अतो द्वयोरपीदं निग्रहस्थानं। अत्र भार-द्वाजोन्यक्षेणा[6]क्षेपन्तावत्करोति उत्तरेणावसानात्परिज्ञानान्नेदन्निग्रहस्थानमिति चेदि-ति। इदम्वाक्यम्व्याचष्टे (।)स्यादेतदि(16a7)त्यादिना। नोत्तरविषयपरिज्ञानादिति स ए[7]व प्रतिविधत्ते। यद्ययमि(16a8)त्याद्यस्यैव विभागः। अप्रतिज्ञानाच्चेति स एव। उत्तरञ्चाश्रयाभावे परपक्षोपक्षेपाभावे सत्ययुक्तमिति युक्तमप्रत्युच्चारणे[8] निग्रहस्थानमित्येतावान् परकीयो ग्रन्थः। अत्राचार्यो दूषणम्वक्तुमारभते। यदि नाम वादीस्वसाधनार्थस्य विवरणव्याजेन प्रसङ्गादपरापरं घोषये[9]त्। यथोदा- 71b
हृतम्प्राक्तत्र करणभुवनानि बुद्धिसत्कारणपूर्व्वकाणीति प्रतिज्ञाशरीरादिव्याख्यान-च्छद्मना सकलं वैशेषिकतन्त्रं घोषयेदिति (16a10)। तथा जिज्ञासितम[1]र्थमात्र-मुक्त्वा कथां विस्तारयेद्यदि नाम वादीति वर्तते। किङ्कृत्वा विस्तारयेदित्याह। प्रतिज्ञादिष्वर्थविशेषणपरम्परयाऽपरान् सिध्यनुपयोगिनोर्थानुपक्षिप्य(16b10)।[2] यथा निर्दशितं पूर्व्वन्नित्यः शब्दोऽनित्यः शब्द इति विवादे जैमिनीयः प्रमाणयति। द्वादशलक्षणेत्यादिना। व्याचष्टे च द्वादशलक्षणानि। यथा वाऽक्षपादा ए[3]वङ्कुर्वन्ति। किममी सर्वे संस्काराः क्षणिका नो वेति विवादे रूपत्वादिसामान्याश्रय(त्वा)त्तदा-श्रयास्तद्विषयाश्च प्रत्यक्षादयः प्रत्ययाः स्वात्मलाभानन्त[4]रप्रध्वंसिनो न भवन्ति। समानानामसमानजातीयद्रव्यसंयोगविभागजनितशब्दकार्यशब्दाभिधेयत्वात्प्रागभा-वादिवदिति। ननु च प्रतिज्ञादीष्वित्यत्रादिशब्देन किं गृह्यते। न तावद्धेतूदाहरणे तन्मात्रमुक्त्वेति वचनात्। न चापरः कश्चित्प्रस्तुतोऽत्रेति (।) नैष दोषो यतो हेत्वादिमात्रमप्युक्त्वेति द्रष्ट[6]व्यं। तेन हेत्वादीनामेवादिग्रहणेन आक्षेप इति केचित्। अपरे पुनराहुरस्थानमेवेदमाशङ्कितं। क्त्वाप्रत्ययनिर्देशोत्र। यस्मादयमत्रार्थो यत्र प्रतिवा[7]दिना जिज्ञासितमर्थमात्रमन्यविशेषणरहितमक्षणिकत्वादिकं तदुक्त्वा वाद्य-

त् । तच्च सर्वं यदा नानुवक्तुं शक्नुयात् कस्तस्य विवादाश्रयाथमत्रोत्तरवचने सामर्थ्यविघातो येन वादिवचनानुभाषणान्निग्रहस्थानमुच्यते । तस्मान्न
16b सर्वां वादिकथामननुभाषमाणो[11] नोत्तरेऽसमर्थः ।

यद्वचननान्तरीयका जिज्ञासितार्थसिद्धिर्यथा *पक्षधर्म्मता* व्याप्ति-प्रसाधनमात्रं । न तत्रापि प्रसङ्गान्तरोपक्षेपस्तदवश्यं साधनाङ्गविषयत्त्वाद् दूषणमेवोपदर्श्यत एव ।[1] तत्रापि न सर्वं प्रागनुक्रमेणोच्चारयितव्यं । पश्चाद् दूषणं वाच्यं । विरुद्धोच्चारणप्रसङ्गात् । दूषणविषयोपदर्शनार्थेऽनु-भाषणे वादिवचनानुक्रमघोषणं व्यर्थमिति न कार्यमेवदूषयता[2]स्यादयं दोष इति नान्तरीयत्त्वात् । प्रतिदोषवचनं विषयोपदर्शनं क्रियत एव (।) नहि सर्वविषयोपदर्शनं कृत्त्वा युगपद्दोषः शक्यतेऽभिधातुं, प्रत्यर्थं

---

हमेतत्साधयामीत्युत्तरकालप्रमाणमारचयन्प्रतिज्ञादिष्वर्थविशेषणप[8]रम्परयापरान - र्थानुपक्षिप्य कथाम्विस्तारयेदिति । तच्चे(16a11)ति प्रतिज्ञादिविशेषणपरम्परया
72a यदप्रस्तुतमेव नाटकाख्यायिकाघोषणकल्पं वादिनोद्ग्रा[9]हितं । तदा कस्तस्य विवादाश्रयश्चासावर्थमात्रश्चाक्षणिकत्वादिकन्तस्योत्तरवचने सामर्थ्यविघातो नैवेत्यर्थः । तस्मान्न वादिकथामननुभाषमाणः प्रति[1]वाद्युत्तरवाद्येन (?) समर्थः । किन्तु यद्वचननान्तरीयिका जिज्ञासितार्थसिद्धिस्तदवश्यमुपदर्श्यत एवेति सम्बन्धः । कस्मात्साधनाङ्गविषयत्वाद् दूषणस्य । परो[2]पनीते हि साधने दूषणम्प्रवर्तत इति सम्बन्धः : किन्नान्तरीयिका पुनर्जिज्ञासितार्थसिद्धिरित्याह । यथा पक्षधर्मता व्याप्तिप्रसाधन-मात्रमि(16b1)ति व्याप्तिः प्रसा[3]ध्यतेनेनेति व्याप्तिप्रसाधनं बाधकप्रमाणोप-दर्शनं किमियमित्यपि साधनप्रयोगेऽर्थान्तरोपक्षेपः कर्तव्यो नेत्याह । न । तत्रापि प्रसङ्गान्तरो[4]पक्षेप (16b1) इति नैरर्थक्यादिति मतिः (।) तावत् मात्रमुपदर्श्यते किं प्रागनुक्रमेण । पश्चात्तु दूष्यते नेत्याह । तत्रापि दूषणविषयोपदर्शनार्थेऽनु-भा[5]षणे न सर्व्वं यावदुपन्यस्तं वादिना तद्दूषणाभिधानात् । प्रागनुक्रमेणोच्चारयितव्यं । कस्मात् त्रिरुच्चारणप्रसङ्गात् । द्विरुच्चारणप्रसङ्गमेव[6] प्रति-पादयितुमादिप्रस्थानमाचरति । दूषणेत्या(16b2)दिना । यदि वचनानुक्रमघोषणं न करोति निर्विषयमिदानीं दूषणम्प्रसक्तमित्याह । नान्तरीय[7]कत्वा (द्16b3) दूषयता विषयोपदर्शनं क्रियत एव । कथम्प्रतिदोषवचनं दोषवचनं दोषवचनम्प्रति । यो यो दोषो भण्यते तस्य तस्य विषयः कथ्यत इत्य[8]र्थः । इदमेवाह (।) अस्य वाद्युक्तस्यायन्दोष इति । किम्पुनः कारणं सर्व्वंप्रत्युच्चार्ययुगपद्दूषणन्नोच्यत इति चेदाह ।
72b नही (16b3) त्यादि । कुतः प्रत्यर्थं दो[9]षभेदात् । विषयवद् भिद्यते दोष इति

दोषभेदात् । तस्माद्यं पदार्थं दूषयति[3] स एव तद्दूषणविषयस्तदा प्रदर्शनीयो नापरस्तु दूषणेऽपरोपदर्शनस्यासम्भवात् । तस्मिन्दूषिते पुनरन्योर्थोऽपरदोषविषय इत्ययमनुभाषणे दूषणे च न्यायः[4] । सकृत्सर्वानुभाषणेपि दोषवचनकाले पुनर्विषयप्रदर्शनीय एवाप्रदर्शिते दोषस्य वक्तुमशक्यत्वात्। तथा च द्विरनुभाषणं कृतं स्यात् । तत्र प्रथमं सर्वानुक्रमानुभा[5]षणं निष्प्रयोजनं, दूषणवादिना दूषणे वक्तव्ये यन्न तत्रोपयुज्यते तस्याभिधानमदोषोद्भावनं द्विरुक्तिश्चेति । सकृत्सर्वानुभाषणं पराजयाधिकरणं वाच्यं । त[6]थास्त्विति चेत् । स्यादेतदुक्तमेतदर्थान्तरं निग्रहस्थानमिति तत्र साधने यतः कुतश्चित्प्रसङ्गादिना नान्तरीयकाभिधानं वादिनोऽर्थान्तरगमनमेवेति । स निग्रहार्हः ।[7] न कश्चित्तत्कथितक्रियमाणप्रसङ्गो न प्रसज्यते । नापि तत्तस्यानुभाषणीयं, न चेदमप्यस्माभिरनुज्ञायते सर्वं प्राक् सकृद्वक्तव्यं पश्चाद्दूषणमिति । किन्तु दूषयता-

---

यावत् । एवमारचितादिप्रस्थानो द्विरुच्चारणप्रसङ्गम्प्रदर्शयति सकृदेवाप्रघुष्टो न । सर्व्वानुभाषणेस्य प्रदर्शिते वि[1]षयदोषस्य वक्तुमशक्यत्वात् । केवलमिदं निःप्रयोजनपराजयाधिकरणं चेत्याह। दूषणवादिना दूषणे वक्तव्ये (16b6) सति यत्र सर्व्वानुक्रमभाषणं तत्र[2] परपक्षक्षोभेनोपयुज्यते तस्याभिधानमिदन्द्विरुक्तपदोद्भावनञ्चेत्येवं व्यत्याशेन(?सेन) पदविन्यासः कार्य इति तस्मात्सर्व्वानुक्रमभाषणम्पराजया[3]धिकरणं वाच्यं अत्रेदानीमाक्षपादः सर्व्वमिदं दूषणमनभ्युपगमेनैव पूर्व्वपक्षस्यास्माभिः प्रतिव्यूढमिति मन्यमानोऽभ्यनुजानाति । तथास्त्वि[4] (16b7) ति । स्यादेतदित्येतदेव व्याचष्टे । यतः कुतश्चिदि(16b7)ति साधनार्थविवरणस्य व्याजेन प्रतिज्ञादिष्वर्थविशेषणपरम्परोपक्षेपेण चाप्रसङ्गात् अनं[5]तरीयकाभिधानं ( 16b7 ) रूपसिद्धिनामादिव्याख्यानकल्पत्वाद्वादिनोऽर्थान्तरगमनमेवेति स तेन निग्रहार्हः । प्रासङ्गिकं ब्रुवाणः किमिति निगृ[6]हृचत इति चेदाह । नहि कश्चित् क्वचित् क्रियमाणप्रसङ्गो न प्रयुज्यते । यथोक्तम्प्राक् नैरात्म्यवादिनः । तत्साधने नृत्यगीतादेरपि प्रसङ्ग इति । नापि तद्वद्वादि[7]ना प्रसङ्गत्वेन आहितं । तस्य प्रतिवादिनो ऽनुभाषणीयं (16b8) । अनुपयुज्यमाण[?न]त्वन्नैवानुभाषणमर्हतीत्यर्थः । तदेतेन यत्पूर्वमुक्तं यदि नाम वादी[8] स्वसाधनार्थविवरणव्याजेने(15b10)त्यादि तदभ्यनुज्ञातं । संप्रति यदुक्तं तत्रापि न सर्व्वं क्रमेणोच्चारयितव्यं । पश्चाद् दूषणम्वाच्यं द्विरुच्चारणप्रसङ्गादिति तदनु[9]जानाति । न चेदमप्यस्माभिरित्या(16b8)दिना । 73a

ऽवश्यं विषयो[8]दर्शनीयोऽन्यथा दूषणावृत्तेरिति ।

एवन्तर्हि नाऽननुभाषणं पृथग् निग्रहस्थानं वाच्यं। (अ)प्रतिभया गतत्वात् । *उत्तरस्य हि र (? अ-) प्रतिपत्तिरप्रतिभा* ( न्या० ५।२।१८ ) (अ)प्रतिपत्तिरप्रतिभा, न चोत्तरविषयमप्रदर्शयन्नुत्तरं प्र[9]तिपत्तुं समर्थः । न ह्यनाक्षिप्तानुत्तरप्रतिपत्तिकमननुभाषणं, तेनाननुभाषणस्य व्यापिकायामप्रतिभायां विहितं निग्रहस्थानत्त्वमननुभाषणं न-मेवाग(?)विधिविहितमिव सा[10]स्नादिमत्त्वं बाहुल्येपि तस्मादप्रतिभैव निग्रहाधिकरणत्त्वेन

---

आचार्य आह। यदि भवद्भिरप्ये[?पी]दमेवेष्टमेवन्तर्हि नाननुभाषणम्पृथग्वाच्यं (16b9)। कस्मात् प्रतिभयागतत्वात् । गतत्वमेव प्र[1]तिपादयति। उत्तरस्य ह्यप्रतिपत्तेरप्रतिभा (न्या० सू० ५।२।१८)। ततः कथङ्गतमित्याह। न चोत्तरविषयमप्रदर्शयन् प्रतिवाद्युत्तरं प्रतिपत्तुं ज्ञातुमभिधातुं वा समर्थः।[2] किमिति न शक्त इत्याह। न हीत्यादि। चोत्तरप्रतिपत्तिरुत्तरा प्रतिपत्तिरित्यर्थः। सा नाक्षिप्ता येनाननुभाषणेन तत्तथा। प्रतिषेधद्वयाद्विध्यवसीय[3] आक्षिप्तोत्तराप्रतिपत्तिकमेवेति। एतदुक्तम्भवति। यो हि नामोत्तरम्प्रतिपद्यतेऽसाववश्यं तद्विषयमप्यवैत्यस्येदं दूषणमिति परिज्ञानात्[4] परिज्ञातविषयश्च कथं सचेतनो न तमनुभाषते। तस्माद्यत्राननुभाषणन्तत्राप्रतिभयाभाव्यमिति सा तस्य व्यापिका तरुरिवखदिरस्य[5] तस्याश्च विहितं निग्रहस्थानत्वं व्याप्येऽननुभाषणे तदाक्षिपतीत्येतन्निगमनव्याजेनाह। तेनेत्यादि। अत्रैव दृष्टान्तं ब्रूते गव्यपरामृष्ट[6] तद्भेदायां सामान्यभूतायाम्विहितमिव सा(?सा)स्नादिमत्त्वत्तद्व्याप्तबाहुलेयेऽपिलब्धमिति वर्त्तते। प्रयोगः पुनर्यदेकविधानसामर्थ्यादनुक्तमपि लभ्य[7]ते। ननुभूयः प्रेक्षापूर्वकारिणा विधातव्यं। तद्यथा गोजातौ शा(?सा)स्नादिमत्वविधानसामर्थ्यात् प्रतिलब्धं तद्व्येषु शा(?सा)स्नादिमत्वं। अप्रतिभानिग्रहस्थान[8]त्वविधानसामर्थ्यात् प्रतिबद्धश्चाननुभाषणनिग्रहस्थानत्वमिति व्यापकविरुद्धोपलब्धिः (।)

73b ननु च विषयं विषयश्च प्रपञ्चोत्तरं प्रतिपद्यमानोप्यति[9]भयकम्पादिभिर्व्याकुलीकृतचेताः प्रतिवादी नानुभाषते स विषयोऽननुभाषणस्याप्रतिभयानालीढस्तत्कथं सा तस्य व्यापिका यतोऽयं हेतुः सिद्धो भविष्यति[1] नैव सम्भवात् । नहि विषयं विषयविषयञ्चोत्तरं प्रतिपद्यमानः कुतश्चिद्बिभेति वेपते वा तदज्ञानकृतत्वाद् भयवेपथुस्वेदादीनां। अथ तथाभूतोऽपि भ[2]यादिभिराकुलीक्रियते स तद्दर्शादावेव तथाभूतो वादमपि कर्तुन्नैव धावति। अपि च। यदि परं बाला एवैवं भूता भवन्ति। न च बालव्यवहारानधिकृत्य[3] न्यायशास्त्राणि प्रणीयन्ते । यद्येवमप्यप्रतिभायामन्तर्भावो

वा नाननुभाषणं। कश्चायं समयनियमस्त्रिरभिहितस्याननुभाषणमि ति। 17a
यदि तावत्परप्रत्यायनार्था प्रवृत्तिः किन्त्रिरभिधीयेत[1]। तथा तथा
स ग्राहणी (यो) यथास्य प्रतिपत्तिर्भवति। अथ परोपता(प)नार्थी तदापि
किं त्रिभिरभिधीयते। साक्षिणां कर्णे निवेद्य प्रतिवादी कष्टाप्रतीतद्रुत-
संक्षिप्तादिभिरुपद्रोतव्यो यथो[2]त्तरप्रतिपत्तिविमूढस्तूष्णीम्भवति ।
नहि परोपतापनक्रमे कश्चिन्न्यायो येन कष्टाप्रतीतप्रयोगद्रुतोच्चारिता
निवार्यन्ते त्रिभिरभिधानं वा विधीयते। न च परोपतापाय सन्तः प्रव-
र्तन्ते[3] शास्त्राणि वा प्रणीयन्ते इत्यदो वक्तव्यं तस्मात्तावद्वक्तव्यं
यावदनेन (न) गृहीतं न त्रिभिरेव। अग्रहणसामर्थ्यं प्रागेव वा परिच्छिन्न-
सामर्थ्येन परिहर्त्तव्यः पुनरनुप्रति[4]बोध्येति [? ध्य इति]॥

---

नैव व्याहन्यते। यस्माद्विविधोत्तरा प्रतिपत्तिरुत्तराज्ञानरूपोत्तरानभिधानरूपा[4] च।
तस्माद्यत्किञ्चिदेतत्। अथ परोपतापनार्था तथापि किन्त्रिरभिधीयते। किन्तर्हि
कार्य्यमित्याह। साक्षिणामुत्कोचोपसङ्क्रमं कर्णे निवेद्या[5]यमत्रार्थो मया विव-
क्षित इत्युत्तरकालं प्रतिवाद्यनाथो वराकः कष्टाऽप्रतीतद्रुतसंक्षिप्तादिभिः
शब्दैरिति शेषः। उपद्रोतव्यः। कस्माद्दु[6]र्मणाः। अप्रतीताः सिंहलभाषादिवदसं
केतिकाः। द्रुताः शीघ्रमुच्चारिताः। संक्षिप्ता सूत्रवाण्टादिवद्वर्तुलीकृतार्थाः। आदि-
ग्रहणेन गोपिता[7]र्थानाङ्ग्रहणं। यथा। सत्वादुर्वायुस्ते दिश्यायोतायाञ्चारात्य-
स्वन्त पक्षे नीलंवल्लिज्ञायैःवेष्टातोयास्पृष्टेशः शमिति। यथा। संप्रति वादी
उत्तरप्रतिपत्तौ[8] विमूढ(:) तूष्णीं भवति। पर्षत्प्रतिवादिभ्यां त्रिरभिहितम-
विज्ञातमविज्ञातार्थं (न्या० सू० ५।२।९) मित्यत्र श्लिष्टकष्टादिशब्दप्रयोगस्य मुनि-
नानिवारितत्वात् नैवमन्यायं कर्तुं लभ्[9]त इति चेदाह। नहि परोपतापक्रम इत्यादि 74a
किञ्च न परोपतापनाय सन्तः प्रवर्तन्ते शास्त्राणि वा प्रणीयन्ते तैरित्युक्तं दुर्जन-
विप्रतिपत्त्य[1]धिकरणे सतां सा[? शा]स्त्राप्रवृत्तेरित्यत्र। यतश्च परानुपतापयितुं
न सन्तः प्रवर्तन्ते तस्मात्तावद् वक्तव्यं यावदनेन न गृहीतं न त्रिरेव वक्तव्यमित्यधि-
कृतं। अथ[2] वादिना शतधापुनः पुन रभिधाने प्रतिवाद्यतिजडत्वाद् गृहीतुं न शक्नो-
तीति निश्चितन्तदाऽग्रहणसामर्थ्ये कथञ्चिन्निश्चिते साधनप्रयोगात्प्रागेव[3] परि-
हर्तव्यो नानेन सहोद्ग्राहयामीति परिच्छिंन[? च्छिन्न]मसामर्थं[? र्थ्यं]। ग्रहणेऽति-
जाड्यापरनामकप्रतिवादिसम्बन्धियेन वादिना स तथा। कथं[4] तथा परिहरन्ना-
शक्तः शंक्यत इत्याह। पराणन्[? न्]साक्षिणः प्रबोध्य नायं शक्तो वाक्यार्थं बोद्धुं
वस्तु त्वेवं व्यवस्थितमिति ॥४॥

*अविज्ञातमज्ञानं* (न्याय ५।२।१७)। "विज्ञातं पर्षदा प्रतिवादिना यदविज्ञातं तदज्ञानं नाम निग्रहस्थानमर्थे खल्वविज्ञाते न तस्य प्रतिषेधं ब्रूयादिति।"[1] एतदप्यननुभा[5]षणवदत्रेति तत्रैव गम्यत्वादवाच्यं। यथाऽननुभाषणेऽप्रदर्शितविषयत्वादुत्तरप्रतिपत्तिरशक्येति (।) अनुत्त(र)-प्रतिपत्त्यैव निग्रहस्थानत्वमुत्तरविषयप्रदर्शनप्रसङ्ग[6]मन्तरेणानुभाषणस्य

---

अविज्ञा[5]तञ्चाज्ञान(न्या० सू० ५।२।१७)मिति भावे निष्ठाविधानात्
साधनवाक्यार्थापरिज्ञानं निग्रहस्थानं। तत एव भाष्ये टीकाकृतो विवृण्वन्ति
वाक्यार्थविषयस्य विज्ञानस्यानुत्प[6]त्तिरज्ञानमिति। अस्तु वा कर्मण्येव निष्ठाविधानं
तथापि वाक्यार्थविषयज्ञानानुत्पत्या विशेषि तं वादिप्रयुक्तं वाक्यमेव प्रतिवादिनो
निग्रहस्थान[7]मिति न किञ्चिद्व्याहन्यते। अन्ये पुनर्विवरणेर्थग्रहणं पश्यन्तः सूत्रे-
प्यर्थग्रहणं भ्रान्त्या पठन्ति। अविज्ञातार्थञ्चाज्ञानमिति सोऽन्येषां पाठः। विज्ञा-
तार्थं[8] साधनवाक्यं परिषदा तस्य प्रतिवादिना यदविज्ञातमनवबोधस्तदज्ञान-
74b मित्येवं भावपक्षेऽक्षरविन्यासः। कर्मपक्षे तु तस्येति नाध्याहर्तव्यमेकवा[9]क्यतयैव
तु व्याख्यातं। विज्ञातं पर्षदेति किमर्थं पर्षदाप्यविज्ञाते वादिन एवाविज्ञातार्थं
निग्रहस्थानं भवतीति ज्ञापनाय। निग्रहस्थानत्वे कारणमाह। अर्थे खल्व[1]विज्ञाते
प्रतिवादी न तस्य प्रतिषेधं ब्रूयादिति। अपरे तूत्तरेण दूषणग्रन्थेन सहैतत् सम्बध्नन्ति
तच्चायुक्तं भाष्यवार्तिकग्रन्थत्वादस्य। गम्यत्वमेव साध[2]यति यथाऽननुभाषणेऽनु-
त्तरप्रतिपत्यैव निग्रहस्थानत्वं कथमुत्तराप्रतिपत्तिरित्याह। अप्रदर्शितविषयत्वा-
त्प्रतिवादिनोत्तरप्रतिपत्तिरशक्येति[3] कृत्वाऽप्रदर्शितो विषयो येनेति विज्ञेयं विशे-
षणसमासो वा। तथाहि दूषणस्य विषयख्यापनार्थमनुभाषते तञ्च परित्यज्य
यद्यदेव वा[4]दिनाऽनुद्ग्राहितमालजालमनुभाषते। तदानीमुत्तरविषयप्रदर्शनप्रसङ्ग-
मन्तरेण तथाभूतस्यानुभाषणस्य वैयर्थ्यादशक्येतिवर्तते। अ[5]नुग्रहप्रतिपत्यैव निग्रह-
स्थानत्वमिति वा। दार्ष्टान्तिकमुपसंहरति। तथा ज्ञानेऽप्युतराप्रतिपत्यैव निग्रह-
स्थानत्वमिति। यस्मादजानन् प्रति[6]वादिदूषणतद्विषयौ कथमुत्तरविषयञ्च
ब्रूयात्। उत्तरविषयो दूष्यः। क्वचित्तु पाठः। कथमुत्तरमुत्तरविषयञ्चोतरमिति।
अत्रैवं यदसम्ब[7]न्धः। अजानन्नुत्तरविषयञ्च कथमुत्तरम्ब्रूयादिति। तस्माद्विषया-
ज्ञानमुतराज्ञानञ्च निग्रहस्थानमप्रतिभयैव गम्यत्वात्। अवाच्यमिति वर्तते किं[8]
कारणमन्यथैवमनिष्प्रमाणे सत्यप्रतिभाया निर्विषयत्वात्। कथं निर्व्विषयत्वमित्याह।

---

[1]अविज्ञानं चाज्ञानम्—इति न्या० भा० पाठः।

वैयर्थ्यात् । तथाऽज्ञानेप्युत्तराप्रतिपत्त्यैव निग्रहस्थानत्वमजानानः
कथमुत्तरमुत्तरविषयञ्च ब्रूयादिति। विषयाज्ञानमुत्तराज्ञानञ्च निग्रहस्था[7]-
नं मन्येथा अतिप्रतिभासानिर्विषयत्त्वात्। अनवधारितार्थो हि नानुभाषते(।)
अननुभाषमाणो विषयमुपप्र(द)र्श्योत्तरं प्रतिपत्तुं न शक्नुयादित्युत्तरं
न प्रतिपद्येत । ज्ञातोत्तरतद्विषयस्योत्त[8]राप्रतिपत्तेरसम्भवात् । उभयमेत-
दुत्तराप्रतिपत्तेः कारणमिति तदभावे प्रतिपत्तिर्भवत्येवेति तयोः पृथग्व-
चनेऽप्रतिभायाः को विषय इति वक्तव्यं निर्विषयत्त्वादवाच्यत्त्वात्[9] च 17b
स्यात्। नोत्तरज्ञानमज्ञानं किन्तर्हि विषयज्ञानं ज्ञाते हि विषये उत्तरा-
ज्ञानात्। तन्न प्रतिपद्येतेति ।

---

अनवधारितार्थो हीत्यादि । अनवधारि[9]तोर्थपूर्वपक्षस्योत्तरस्य च येन प्रतिवादिना 75a
स नानु[1]भाषेत् । अननुभाष्यमाणश्चासौ विषयमप्रदर्श्योत्तरं प्रतिपत्तुन्न शक्नुयादित्यत
उतरन्न प्रतिपद्येत । न जानीयान्नाभिदध्याद्वा । कस्मादुत्तरविषययोरज्ञाने सत्युत्तरा-
प्रतिपत्तिरित्यत आह ज्ञानोत्तरतद्विषयस्योत्तराप्रतिपत्तेरसंभवादिति । ज्ञाता
उत्त[2]रतद्विषयो येनेति वृत्तः। तस्मादुभयमेतदुत्तराज्ञानं। विषयाज्ञानञ्च प्रति-
पत्तेरप्रतिभापरपर्य्यायायाः कारणं। ननु चोत्तराज्ञानमेवाप्रतिभा त[3]त्कथं सैवा-
त्मनः कारणत्वेनोपदिश्यते। नोत्तरानभिधानलक्षणाया अप्रतिभासाया विवक्षित-
त्वात् । तदभाव इति तयोरुत्तरविषयाज्ञानयोरभा[4]वे सति प्रतिपत्तिरभिधान-
मुत्तरस्य भवत्येव। इति तस्मात्तयोर्विषयाज्ञानोत्तरज्ञानयोरज्ञानसंज्ञितेन निग्रह-
स्थानेनाप्रतिभा निग्रहस्थाना[5]त् पृथक्वचने सत्यप्रतिभायाः को विषय इति
वक्तव्यं। न चेद्विषयो भण्यते। तदा निर्विषयत्वादवाच्यैव स्यादप्रतिभा। तयोर-
ज्ञानानुभाषणयो[6]ः पृथग्वचन इत्यन्ये व्याचक्षते। अज्ञानाप्रतिभयोर्विषयभेदव्यव-
स्थापनाय परः प्राह। नोत्तरज्ञानमज्ञानमुच्यते । यतोऽप्रतिभा निर्विषयत्वादवा[7]-
च्यम्भवेत्। किन्तर्ह्यज्ञानमित्याह। विषयाज्ञानं। एवमपि कथमप्रतिभा विषय-
वती भवतीत्याह । ज्ञाते विषये सत्युत्तरकालमुत्तराज्ञानात्। प्रतिवादी त[8]दुतरन्न
प्रतिपद्येत न ब्रूयात्। अतोऽस्ति विषयोऽप्रतिभायाः। अज्ञानाक्रान्तः। एवमप्य-
वाच्य[9]त्वान्नमुच्यस इत्याह। एवन्तर्हीति। अज्ञानेनानुभाषणस्याक्षेपमेव साधयति। 75b
नहि विषयं सम्यक् प्रतिपद्यमानः कश्चित् सचेतनो नानुभाषेतेति नानुभाषणम[1]-
ज्ञानात्पृथग्वाच्यं। अपिचैवमप्रतिभाप्यननुभाषणवदज्ञानात्पृथग्नवाच्येत्याह। उत्त-
राज्ञानस्य चाक्षेपादिति। इदं व्याचष्टे विषयेत्यादिना। ज्ञाते विषय[2] इत्यादि परः।

---

[1] न्या० भा० पृ० २६२ ।

अस्ति विषयोऽप्रतिभाया इति चेत् । एवन्तर्ह्यननुभाषणं निर्विषयमज्ञानेनाक्षेपा[1]त्। न हि विषयं सम्यक् प्रतिपद्यमानः कश्चिन्नानुभाषेतेति नाननुभाषणं पृथग्वाच्यमुत्तराज्ञानस्य चाक्षेपात् । विषयाज्ञानेनोत्तराज्ञानमप्याक्षिप्तमेव । न हि विषयमजानन्नुत्तरञ्जा[2]नातीति नैवाप्रतिभाया विषयोस्ति । ज्ञातेपि विषये पुनरुत्तराज्ञानमप्रतिभाया विषय इति चेत् । एवन्तर्हि विषयोत्तराज्ञानयोरपि प्रभेदान्निग्रहस्थानान्तरालवाच्यानि । यथाऽज्ञान[3]स्य विषयो ज्ञानमुत्तराज्ञानमिति प्रभेदादसत्यपि गुणातिशये निग्रहस्थानान्तरव्यवस्था क्रियते । तथाऽज्ञानयोरपि सर्वाक्रमर्द्धा( ? )ज्ञानमित्यादिप्रभेदान्निग्रहस्था[4]नान्तराणि किन्नोच्यन्ते । न चोभयस्याप्यज्ञानस्य संग्रहवचने — दोषो गुणस्तु स्यादिति संग्रहवचनं न्याय्यं । तस्मादननुभाषणाज्ञानयोरप्रतिभाविषयत्त्वान्न पृ[5]थग्वचनं। अपि च न पूर्वोत्तरपक्षवादिनो हेत्वाभासाप्रतिभाभ्यामन्यन्निग्रहस्थानं न्याय ( ? य्य ) मस्ति । तदुभयवचनेनैव सर्वमुक्तमिति । तदुभयाक्षिप्तेषु प्रभेदेषु गु[6]णातिशयमन्तरेण वचनादेऽतिप्रसङ्ग( ात् )व्यर्थः प्रपञ्च इति ॥

---

इदमुक्तम्भवति द्विधोत्तराज्ञानविषयाज्ञानसहचरञ्च विषयज्ञानसहचरञ्च । तत्राद्यस्य विषयाज्ञाने नाक्षेपेऽप्युत्तरमनाक्षिप्तमेव[3] ततो द्वितीयापेक्षयाऽप्रतिभायाः पृथगुपादानमिति । अनवस्थैव निग्रहस्थानानां प्रसज्यत इत्याह । एवन्तर्हीत्यादि । यथेत्याद्यस्यैव वि[4]भागः । तथा ज्ञानयोरपीति विषयोत्तराज्ञानयोरपि । सर्व्वस्योत्तरस्य विषयस्य चाज्ञानं । आदिग्रहणेन द्वित्रिचतुर्भागाद्यवरोधः । वि[5]षयोत्तराज्ञानयोः सङ्ग्रहवचने दोष इति चेदाह । न चेति । यथा न दोषस्तथागुणोपि नास्तीति चेदाह । गुणश्च लाघवसंज्ञः स्यादिति सं[5]ग्रहवचनं न्याय्यं । अप्रतिभाविषयत्वान्न पृथग्वचनं । अप्रतिभावचनेनैवानयोः सङ्ग्रह इत्यर्थः । न केवलमनयोरेवापृथग्वचनं । न्याय्यमपि त्वन्ये[7]षामपीत्याह । अपि चेत्यादि । तदुभयवचनेनैवेति । हेत्वाभासाऽप्रतिभयोरेव वचनेन सर्वप्रतिज्ञाहान्यननुभाषणाद्युक्तं । नहि कश्चिद्धचन्यस्साधनवादी[8] प्रतिपक्षधर्ममभ्युनुजानाति प्रतिज्ञाम्वा प्रतिज्ञासाधनायोपादत्त इत्यादि वाच्यं । तदा न कञ्चि(द्)दूषणं व्यक्तमेव यन्नानुभाषते ।
76a कथां विक्षिपति । परम[9]तञ्चानुजानातीदि(?ति) वक्तव्यं । तदुभयाक्षेपेपि प्रपञ्चो
गुणवानतस्तदवचनादरोमुनेरिति चेदाह । तदुभयाक्षिप्तेषु प्रभेदेषु गुणातिशयम[1]न्तरेण । अनुपलभ्यमानत्वाद् गुणस्य प्रपञ्चवचनादरेऽतिप्रसङ्गात् । कक्षपिट्टिता-

*उत्तरस्याप्रतिपत्तिरप्रतिभा* (न्या०५।२।१८)। परपक्षप्रतिषेधे उत्तरं
यदा न प्रतिपद्येत तदा निगृही[7]तो वक्तव्यः साधनवचनान्तरम्प्रतिविषय-
मुत्तरे व्यर्थं, तदज्ञानक्रमघोषणश्लोकपाठादिना कालङ्गमयन् कर्त्तव्याप्रति-
पत्त्या निग्रहार्ह इति न्याय्यं निग्रहस्थानमिति[8] ॥

*कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः* ( न्या० ५।२।१९ )। यत्किञ्चि-
त्कर्त्तव्यं व्यासज्य कथां विच्छिनत्ति। इदं मे करणीयं परिहीयते। अस्मि-
न्नवसिते पश्चात्करिष्यामि। प्रतिश्याय क[9] लात्मञ्ज (?) क्षिणोत्येवमादिना 18a
कथां विच्छिनत्ति। स *विक्षेपो* नाम निग्रहस्थानमेकमेकतरनिग्रहान्तायां
कथायां स्वयमेव कथान्तं प्रतिपद्यत इति। इदमपि यदि पूर्वपक्षवा[1]दी
कुर्यात्। व्याजोपक्षेपमात्रेण न पुनर्भूतस्य तथाविधकथोपरोधिनः कार्य-

---

दीनामभिधानप्रसङ्गात्। अतो व्यर्थः प्रपञ्चो महामुनिनाक्रियत[2] ॥०॥

परपक्षप्रतिषेधे कर्तव्ये उत्तरं दूषणं यदा न प्रतिपद्यते न वेत्ति नाभिदधाति तदा निगृहीतो वेदितव्य इतीयान् परग्रन्थः। साध्वेतन्निग्रहस्थानं। अतएवास्माभिरपीदमदोषोद्भावनमित्यत्रोक्तमित्येतत् मत्वाऽभ्यनुजानाति। साधनेत्यादि। साधन वचनानन्तरं प्रतिवादिना दूषणम्वक्तव्यं। स य[4]दा सर्व्वं तदकृत्वा सर्व्वानुक्रमानुभाषणेन श्लोकपाठेन सभासम्वर्ण्णनेनान्येन कालन्नयति तदासौ व्यर्थं निष्प्रयोजनं कालङ्गमयन्कर्त्तव्यस्य दूषणाभि[5]धानस्य प्रतिपत्त्याऽननुष्ठानेन निगृह्यते। व्यर्थस्येदं क्रियायाः कालस्य विशेषणं ॥०॥

कार्यव्यासङ्गः कर्णीयोपन्यासः कथाविच्छेदः क[6]थानिवृत्तिः। यथा जीर्ण्ण-
कला मे बाधते। सम्प्रति वक्तुं न शक्नोमि पश्चात् कथयिष्यामीति एवमादिना
प्रकारेण कथामुद्ग्राहणे काचिच्छिनत्तिः। निग्रहस्थाने[7] कारणमाह। एकतरस्य
वादिनः प्रतिवादिनो वाऽसाधनाङ्गवचनेनादोषोद्भावनेन च निगृह्णन्ती निग्रह-
पर्यवसाना कथा। तस्याञ्च तथाभूतायां प्रस्तुता[8]यां स स्वयमेव कथांतं कथा
पर्यवसानं प्रतिपद्यत इति निग्रहस्थानमेतत्। अत्राचार्योब्रूत (।) इदमपि कार्यव्यास-
ञ्जनं यदि तावत् पूर्वपक्षवादी कुर्यात्[9] साधनाभिधानशक्तिविकलत्वाद् व्याजो- 76b
पक्षेपमात्रेण येन केनचिच्छलेनेत्यर्थः। न पुनर्भूतस्य तथाविधकथोपरोधिनः
कार्यस्य भावे सति कुर्यादिति वर्त्तते। तथा वि[1]धामुद्ग्राहणिकारूपाङ्कथामुपरोद्धुं
शीलं यस्य कार्यस्याजीर्ण्णकला कुक्षिशूलगेहु (?) दाहाद्यैस्तत्तथा। यदि सद्भावे-
नैव तस्य तस्याम्वेलायां कुक्षिगलशूलगेहु (?) दा[2]हादयो भवन्ति तथा सति नैव
निग्रहस्थानमित्यर्थः। यदा पुनर्व्याजमात्रेणैव करोति तदा तस्य पूर्व्वपक्षवादिनः

स्य भावे तस्य स्वसाधनासामर्थ्यपरिच्छेदादेव विक्षेपः स्यात्। तथा चेदमर्थान्तरगमन एवान्तर्भवेत्। असमर्थसाधनाभिधानात्। हेत्वाभासेषु वा प्रकृतसाधनासम्बद्धप्रतिपत्तेश्च निरर्थकापार्थकाभ्याञ्च न भिद्यते। अतिप्रसङ्गश्चैवं प्रकाराणामस[3]म्बद्धसाधनवाक्यम्प्रतिपत्तिप्रभेदानां पृथग् निग्रहस्थानव्यवस्थापने प्रोक्तः। अथोत्तरवाद्येवं विक्षिपेत्तस्यापि साधनानन्तरमुत्तरे प्रतिपत्तव्ये तदप्रति[4]पत्त्या विक्षेपप्रतिपत्तिः प्रतिभायामर्थान्तरे वान्तर्भवति।

ननु नावश्यं साधनदूषणाभ्यामेव सर्वस्य प्रतिपत्तिर्येन सर्वा वादिप्रतिवादिनोर्न सम्यक् प्रति[5]पत्तेर्हेत्वाभासेर्थे प्रतिभायां वान्तर्भावात्। भवति हि अनिबद्धेनापि कथाप्रपञ्चेन विवाद इति। न (।) असम्भवात् एकत्र पूर्वकरणे विरुद्धाभ्युपगमयोर्विवादः स्यात्।[6]

---

स्वसाधनासामर्थ्यपरिच्छेदादेव विक्षेप[3]: स्यात्ततः किमित्याह। तथा चेदं विक्षेपसञ्ज्ञितन्निग्रहस्थानमर्थान्तर एवान्तर्भवेत्। रूपसिद्धिनामादिव्याख्यानसमानत्वात् करणीयोपन्यास[4]स्य। हेत्वाभासेष्वेवान्तर्भवेदित्यधिकृतं। कस्मादसमर्थञ्च तत्साधनञ्च तस्याभिधानात्। किञ्चेदं निरर्थकापार्थकाभ्यां सकाशान्न भिद्यते। किं[5]कारणं प्रकृतञ्च तत्साधनञ्च तेनासम्बद्धा च सा प्रतिपत्तिश्च ततः साधनवाक्येन सहास्य दशदाडिमादिवचनस्येव जबगडादिवर्ण्णक्रमस्येव च[6] सम्बद्धानुपलम्भादित्यर्थः। किञ्चिन्मात्रभेदान्निमित्तलेशेन पृथगुक्तमिति चेदाह। अति प्रसङ्गश्चेत्यादि। असम्बद्धासाधनवाक्येन प्रतिपत्तिर्येषां[7] प्रतिभेदानान्तेऽसम्बद्धसाधनवाक्यप्रतिपत्तयः। ते च ते प्रभेदाश्च तेषामिति कार्यं एवन्तावत् पूर्वपक्षवादिसम्बन्धेन विक्षेपस्य पृथगनभिधान[8]मुक्तं॥ अधुना प्रतिवादिसम्बन्धेनाप्याह। अथोत्तरपक्षवाद्येवं बलासकलात्मकण्ठं क्षिणोतीत्यादिना प्रक्रमेण कथां विक्षिपेत्
77a तदानीन्तस्याप्यु[9]त्तरपक्षवादिनः साधनानन्तरमुत्तरे प्रतिपत्तव्ये सति तदप्रतिपत्त्या तस्योत्तरस्यानभिधानेन विक्षेपप्रतिपत्तिर्यासाऽप्रतिभायामर्थान्तरे वान्तर्भवती[1]ति परस्तु यथोक्तमन्तर्भावमसहमानश्चोदयति।

ननु नावश्यमिति तदेव द्रढयति(।)भवति ह्यनिबद्धेनापि साधनवाक्येनासम्बद्धे नापि कथाप्रबन्धेन[2] परप्रतिभाहरणायान्तशो जननीव्यभिचारचोदनेनापि विवाद इति। आचार्य आह। नासम्भवादेवंविधस्य विवादस्य। यस्मादेकत्र शब्दादावधिकर[3]णे नित्यत्वानित्यत्वादिप्रतिज्ञानाविरुद्धावभ्युपगमौ ययोर्वादिप्रतिवादिनोस्तयोर्विवादः स्यात्। कुत एतदित्याह। अविरुद्धावभ्युपग[4]मौ ययोस्तौ

अविरुद्धाभ्युपगमयोरनभ्युपगमयोर्वा विरोधाभावात् । तत्रावश्यमेकस्य
प्राग्वचनप्रवृत्तिर्युगपत्प्रवृत्तौ परस्परवचनग्रहणावधारिणोन्तराणाम-
सम्भ[7]वेन प्रवृत्तिवैफल्यात् । स्वस्थात्मनामप्रवृत्तेः (।) तेन च स्वोपगमो-
पन्यासेऽवश्यं साधनं वक्तव्यमन्यथा परेषामप्रतिपत्तेः । अपरेण च
तत्सत्यपि दूषणं उभयो[8]रसम्यक्प्रतिपत्तौ हेत्वाभासप्रतिभयोः प्रसङ्ग
इति । सर्वो न्यायप्रवृत्तः पूर्वोत्तरपक्षोपन्यासेऽयं नातिपतति । एतेनैव
वितण्डा प्रत्युक्ताऽभ्युपगमाभावे[9] विवादाभावात् । यदा तर्ह्यभ्युपगम्य 18b
वादं विफलतया न किञ्चिद्वक्ति, अन्यद्वा यत्किञ्चित्प्रलपति तदा कथं

---

तथा न विद्येते विरुद्धाविरुद्धयोरभ्युपगमौ ययोः पुरुषयोस्तावभ्युपगमौ । तयो-
र्विवादाभावात् । तत्रैतस्मिन्व्यवस्थिते न्याय[5]निर्धारणे वा तत्र शब्दः ।
एकस्य वादिनः प्रतिवादिनोवश्यं प्राग्वचनप्रवृत्तिः । यौगपद्येन किन्न ब्रूत
इत्याह । युगपत्प्रवृत्तौ स्वस्थात्मना[6]मप्रवृत्तेरिति सम्बन्धः । एतदेव कुत
इत्याह । परस्पर वचन श्रवणावधारणोत्तराणामसम्भवेन करणभूतेन प्रवृत्ति-
वैफल्यात् । यदि हि परस्परवच[7]नस्यासङ्करेण श्रवणम्भवेत्ततस्तदर्थमवधार-
यत्युत्तरञ्च । युगपत्प्रवृत्तौ च दिगम्बरपाठकलकल इव सर्व्वमेतन्न संभवति तस्मा-
दवश्यमेकस्य प्राग्वचन[8]प्रवृत्तिः । अतस्तेन च स्वस्थात्मना पूर्व्वपक्षवादिनाऽनित्यं
शब्दं साधयामीत्यादिना स्वोपगमोपन्यासे कृते सत्यवश्यं साधनं वक्तव्यं । अन्यथेति
हेत्वनभिधा[9]ने परेसां[?षां] साक्षिप्रभृतीनामप्रतिपत्तेः । अपरेण चेत्युत्तरपक्ष- 77b
वादिना तत्सम्बन्धिवादिप्रोक्तसाधनसम्बन्धि दूषणं वक्तव्यमिति वर्त्तते (।)
तस्मादुभयोर्वादिप्र[1](ति)वादिनोरसम्यक् प्रवृत्तौ सत्यां हेत्वाभासाप्रतिभयोः
संग्रह इति सर्व्वो न्यायप्रवृत्तः पूर्व्वोत्तरपक्षोपन्यासो द्वयं हेत्वाभासाप्रतिभाञ्च
नातिपतति ।

ननु च यदि न्यायः प्रवृत्तः कथन्तत्रास्य द्वयस्याधिकारः । कथञ्चैकत्र
धर्मिणि विरुद्धावुपन्यासौ न्यायप्रवृत्ताववश्यं हि तत्रैकेनोपन्यासेन न्यायं प्रवृत्तेन
भाव्यं । अन्य[3]था धर्मीद्व्यात्मको भवेत् । नाभिप्रायापरिज्ञानात् । नेदम्भवता
न्यायप्रवृत्तत्वमाचार्येण विवक्षितं पर्यज्ञायि । न्यायप्रवृत्तौ (?) हि पूर्व्वोत्तरपक्षोप[4]-
न्यासस्य युगपत्प्रवृत्यभावेन जननी व्यभिचारवेदनाद्यभावेन चाभिप्रेतं । एतेनैकत्र
ह्यधिकरणे विरुद्धाभ्युपगमयोर्विवादः स्यादित्यादि[5]ना वितण्डा प्रत्युक्ता । कथं
प्रत्युक्तेत्याह । अभ्युपगमाभावे विवादाभावात् । इदमुक्तम्भवति । स्वपक्षस्थापना
हीनो वाक्यसमूहो वितण्डेत्युच्य[6]ते (न्या० सू० १।२।३ ) । यदि चवैतण्डिकस्य

हेत्वाभासान्तर्भावः । असमर्थितसाधनाभिधान एवमुक्तमनभिधानान्याभिधान[1]योरपि पराजय एवेत्युक्तमभ्युपगम्य वादमसाधनाङ्गवचनात् । एतेनाधिकस्य पुनरुक्तस्य च प्रतिज्ञादेर्वचनस्य च निग्रहस्थानत्वं व्याख्यातं तदपि हि प्रतिपादितार्थविपर्यय[2]त्वात्साधनसामर्थ्य-

---

स्वपक्षो नास्ति विवादस्तर्हि कथमिति वक्तव्यं। परपक्षप्रतिषेधार्थम्वैतण्डिकः प्रवर्त्तत इति चेत् । परपक्षप्रतिषेध एव तर्ह्यस्य[7] स्वपक्षस्थापनेति वितण्डालक्षणं विशीर्यते। तथा हि यो येनाभ्युपगतः स तस्य स्वपक्षः। परपक्षप्रतिषेधश्च तेनाभ्युपगतः स्वपक्षतां नातिवर्त्तत इति।[8] यदा तर्ह्युपगम्य वादं प्रतिज्ञामात्रेण विफलतया परिषच्छारद्येन व्याकुलीकृतत्वादित्यर्थः। न किञ्चित् साधनं तदायासं वा वक्ति।
78a अन्यद्वा किञ्चित् प्रलप[9]ति । साधनतदाभासव्यतिरिक्तं काको विरूपं विरौति
नूनमयं मे गेहे विपदं सूचयति तदलमनेन विवादेन। यामि तावद् गेहे किन्नु मे पितुर्मरणमन्यद्वा वर्त्तत इत्या[1]दि । तथा कथं हेत्वाभासान्तर्भावः। साधनाभावाद्धेत्वाभासासम्भवं मन्यते। उत्तराप्रतिपत्तिरपि नास्त्येव पूर्व्वपक्षवादित्वादित्यभिप्रायः। तदनेन द्वयन्नातिपतती[2]त्येतद्विघटयितुमिच्छति परः। आचार्य आह। असमर्थितसाधनाभिधान एवमुक्तं द्वयं नातिपततीति प्रोक्तसाधन एतदुक्तमिति यावत्। अप्रोक्ते तु कथं प्रतिपत्त[3]व्यमित्याह। अनभिधानान्यभिधानयोरपि सतोः पराजयः एवेत्युक्तं प्रकरणावतार एव। तदेव स्मरयति। अभ्युपगम्यवादमसाधनाङ्गवचनादिति।[4] तथाहि तत्र व्याख्यातं। साधनाङ्गस्यानुच्चारणं। साधनाङ्गाद्वा यदन्यस्याभिधानं तत्सर्व्वमसाधनाङ्गवचनमिति। एतेनेत्यन्याभिधानेन पराजयवचने[5] नाधिकस्य पुनरुक्तस्य च प्रतिज्ञादेर्वचनस्य च निग्रहस्थानत्वं व्याख्यातं। कथमित्याह। तदपि हीत्यादि। अनेनैतदाह। यद्युक्तियुक्तमक्षपादेन किञ्चि[6]न्निग्रहस्थानमुक्तन्तदस्माभिरसाधनाङ्गवचनपदेनैव संगृहीतमिति यद्येवं प्रतिज्ञादेर्वचनस्य चेति किमर्थयुक्तन्नहि प्रतिज्ञोपनयनिगमनानां वचनन्नि[7]ग्रहस्थानमक्षपादेनोक्तं। प्रत्युत तदवचनमेव निग्रहस्थानतया। यदिष्टं हीनमन्यतमेनाप्यवयवेन न्यून (न्या० सू० ५।२।१२)मिति। एवं तर्हि दृष्टान्तार्थमेतद्यथा तस्याप्रतीत[8] प्रत्यायनशक्तिविकलत्वादसाधनाङ्गवचनपदेनाभिधानं। तथाधिकपुनर्वचनयो-
78b रपीति। तत एव च द्वितीयश्चकार इव शब्दार्थे वर्त्तते। अन्यथा पुनरु[9]क्तस्य चेत्ययं
बोध्यर्थः स्यात्। केचित्तूत्तरञ्चकारन्न पठन्ति। तैः पुनरुक्तव्याख्यानमेव प्रतिज्ञादेर्वचनस्य चेत्येतद् व्याख्येयं। एवमपि न युक्तमक्षपादेनैवम्विधस्य पुन[1]रुक्तस्यानिष्टत्वान्नास्ति दोषः। पूर्व्वतुल्यधर्मतयाऽस्यापि पुनरुक्तेऽन्तर्भावितत्वात् ॥०॥

विधानमप्रतीतप्रत्ययतया न लक्षणात् साधनस्यासाधनाङ्गवचनमिति निग्रहस्थानमिति।

*स्वपक्षदोषाभ्युपगमात्परपक्षे तं दोषं[1] प्रसज्जाय मतानुज्ञा*[3] ( न्या० ५।२।२० ) ( । ) यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं दोष इति ब्रवीति यथा भवांश्चौरः पुरुषत्वादिति उक्ते स तं प्रति ब्रूयाद्भवानपीति । स स्वपक्षे दोषाभ्युपगमात्पर[4]पक्षे तं दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञा निग्रहस्थानमिति (।) अत्रापि यदि पुरुषत्वाच्चौरो भवानपि स्यान्न च भवता नैवमिष्टस्तस्मान्नायं चौर्यहे[5]तुरिति यद्ययमभिप्रायः । तदा न क दोषोनभिमते तदात्मनि चौरत्वेन हेतुदर्शने दूषणात् ।

---

स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा (न्या० सू० ५।२।२०) (18b3) दोषपरि[2]हारे वक्तव्ये दोषस्यापरिज्ञानात् परमतमनुजानात्यतो निगृह्यते। तदाह परेण वादिना चोदितं पर्यनुयुक्तं दोषमनुवृत्या परिहृत्य भवतोऽप्ययं दोष इति ब्र[3]वीति। यथा भवांश्चौरः पुरुषत्वा(16b4) च्छबरादि(वदि)त्युक्ते वादिना स प्रतिवादी तं वादिनं प्रतिब्रूयात् । भवानपि चौर इति सोपि शब्दप्रयोगादात्मनश्चौर[4]त्वमभ्युपगम्य परपक्षे तन्दोषमासञ्जयन्नापादयत्यपरेण वादिना यन्मतं प्रतिवादिनश्चौरत्वं तदनुजानाति। तथा हि ते न मुक्त संस[?श] यन्तावदात्मन[5]श्चौरत्वं प्रतिपत्तुमन्यथा नापि तमभिदध्यात् । वादिनि तु तदस्तिनास्तीति चिन्त्यमतो मतानुज्ञा निग्रहस्थानं। इदमाचार्यो निराकरोति। अत्रापि[6] (18b5) यद्ययमभिप्राय उत्तरवादिनः पुरुषत्वाच्चौरो भवानपि स्यादहमिव। न च भवतात्मैवं चौरत्वेनेष्टस्तन्नायं पुरुषत्वादिति चौर्ये साध्ये हेतुरचौरेपि भव[7]ति विपक्षभूते वृत्तेरनैकान्तिकदोषदुष्टत्वादिति। तदस्मिन्प्रतिवादिनोऽभिप्राये न कश्चित्तस्य दोषो मतानुज्ञालक्षणोऽन्यो वा । कस्मादनभिमते चौरत्वे न रू[8]पेण तस्य वादिन आत्मनि विपक्षभूते हेतोः सत्वप्रदर्शनेन प्रकारेण दूषणात्। विदग्धभङ्गाव्यभिचारोद्भावनादिति यावत् । औद्योतकरं* चोद्यमाशङ्कते[9] 79a प्रसङ्गमन्तरेण भवानपि स्यादित्येवमाञ्जसेनैव मृजुनैव क्रमेण किन्न व्यभिचारितो हेतुस्त्वय्यपि अचौरे वर्त्तते पुरुषत्वमतोऽनैकान्तिकत्वमिति । तस्माद्यत[1] एवासावकौटिल्ये कर्तव्ये कौटिल्यमाचरति तत एव निगृह्यत इति।

---

[1] निग्रहस्थानप्राप्तस्यानिग्रहः—इति न्या० भा० पाठः।

*न्यायवार्त्तिके ५।२।२१ (पृष्ठ ५५९)

प्रसङ्गमन्तरेण—मेनैव किन्न व्यभिचारित इति चेत्। य[6]त्किञ्चिदेतत्। सन्ति ह्येवंप्रकारा अपि व्यवहारा लोक इति। अथ तदुपक्षेपमभ्युपगच्छत्येतदप्युत्तराप्रतिपत्तौ न तत्साधने निग्रहो नापरत्र स्वदोषोप[7]क्षेपात्तत्साधननिर्दोषतायां हि तदभ्युपगम एवोत्तराप्रतिपत्तिरिति तावतैव पूर्वमापन्ननिग्रहस्य परदोषोपक्षेपस्यानपेक्षणीयत्वादिति ॥

[1]*निग्रहप्राप्तस्यानिग्रह*[8]*(:) पर्यनुयोज्योपेक्षणं* (न्या० ५।२।२१) (।) पर्यनुयोज्यानामनिग्रहोपपत्त्या चोदनीयः तस्योपेक्षणं निग्रहप्राप्तौ सत्यननुयोगः। एतच्च कस्य पराजय इत्यनुयुक्तया पर्षदा वक्तव्यं न[9] खलु निग्र-

---

आचार्य आह। यत्किञ्चिदेतद(18b6)द्योतकरं वचो यस्मात् सन्ति ह्येवं प्रकारा वैदग्ध्यप्रवर्तिता व्य[2]वहारा लोके। तथा हि मातरो भावत्क्यो बन्धक्यः स्त्रीत्वादितरबन्धकीवदित्युक्ताः पशुपालादयोपि जडजनङ्गमादिजनसाधारणं वैदग्ध्यमनुसरं[3]तः प्रत्यवतिष्ठन्ते। तावकीनापि माता तथा स्यादिति न च तेऽनेन प्रकारेण स्वस्याः स्वस्या मातुर्बन्धकीत्वं प्रतिपद्यन्ते। अपि तु भङ्ग्या हेतुव्यभि[4]चारचोदनया परं प्रतिवदन्ति। तस्मादेवं बालहालिकादिलोकप्रकटमपि व्यवहारालोकमपसारयता यदि परमुद्योतकरत्वमेवोद्योत[5]करेण उद्योतितमात्मनः। अथोच्यते नैवासौ भंग्या व्यभिचारमादर्शयत्यपि तु तस्य साधनस्य सम्यक्त्वमभ्युपगम्यैव तेन दोषेण परमपि[6] कलङ्कयतीत्यत आह। अथ तदुपक्षेप(:) पुरुषत्वाद् भवांश्चौर इत्येनमभ्युपगच्छत्येव तदाप्यसौ तत्साधन उत्तराप्रतिपत्यैव निग्रहार्हो नापरत्र[7] वादिनिस्वदोषस्य चौरत्वस्योपक्षेपात्। निग्रहार्ह इति वर्त्तते। इदमेवोपोद्बलयति। तत्साधननिर्दोषतायां(18b8) ह्यंगीकृतायामिति शेषः। तस्योपक्षेप[8]स्याभ्युपगम एव यः स एवोत्तराप्रतिपत्तिरिति तावतैवोत्तराप्रतिपत्तिमात्रेणैवापरत्र दोषप्रसञ्ज-
79b नात्। पूर्वसाधननिग्रहस्य सतः प्रतिवादि[9]नः आपन्नः प्राप्तो निग्रहो येन तस्येति चेति विग्रहः। परदोषोपक्षेपस्य मतानुज्ञालक्षणस्यानपेक्षणीयत्वात्पराजितपराजयाभावादिति भावः ॥०॥

निग्र[1]हप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं (18b9) पर्यनुयोज्यो नाम निग्रहप्राप्तस्यो(पे)क्षणन्निग्रहप्राप्तोसीत्यनभिधानं। क(:) पुनरिदं पर्यनुयोज्योपेक्षणं निग्रहस्थानं[2] चोदयति। न तावत् पर्यनुयोज्य इति युक्तं। असम्भवात्। न ह्यस्ति सम्भवो यत् परदोषप्रतिपादनार्थमात्मनो दोषवत्वमसावभ्युपेति। निग्रहप्राप्तः सन्न

---

[1]परपक्षे दोषप्रसंगो—इति न्या० भा० पाठः।

हप्राप्तः स्वकौपीनं विवृणुयादिति। अत्रापि यदि साधनवादिनं निग्रहप्राप्त-
मुत्तरवादी न पर्यनुयुंक्ते, अप्रतिभैवास्योत्तराप्रतिपत्तेरिति न पर्यनुयोज्यो-
पे[10]क्षणं पृथग्निग्रहस्थानं न्यायचिन्तायां पुनर्नद्वयोरेकस्यापि अत्र 19a
जयपराजयौ। साधनाभासेनार्थाप्रतिभासनात् भूतदोषाभिधानाच्च।
अथ कञ्चिद्दोषमुद्भावयति कञ्चिन्न तदा[1] निग्रहमर्हति। उत्तरप्रतिपत्तेः।
अर्हत्येव सतो दोषस्यानुद्भावनादिति चेत्। न। सत इति कृत्वा
सर्वे दोषा अवश्यवक्तव्या अवचनेन वा निग्रहः। एकेनापि तत्साधन-
विघातादे[2]कसाधनवचनवत्। यथैकस्यार्थस्यानेकसाधनसद्भावे

---

[3]हमनेनोपेक्षितो निग्रहस्थानस्यापरिज्ञानात्। तस्मादयन्दोषवानिति नाप्युपेक्ष इति युक्तं। यस्मादसौ न जानात्येवायं निग्रहप्राप्त इति। तथा[4] ह्यपरिज्ञानादेवासौ नानुयुंक्ते निग्रहं प्राप्तोसीति। परिज्ञाने वा कथमुपेक्षेत। उपेक्षणे वा समचित्तः कथमेवं प्रकटयेदयं मयोपेक्षितः[5] स दोषस्ततो मम पर्यनुयोज्योपेक्षणं निग्रहस्थानमिति। न चान्यस्तृतीयः कश्चिदिहानुषङगी तत्केनेदं चोदनीयमित्येतत् सर्व्वमाशङक्य पक्षिल[6] स्वामी ब्रूते। एतच्च पर्यनुयोज्योपेक्षणं वक्तव्यञ्चोदनीयङकस्य पराजय इत्येवं वादिप्रतिवादिभ्यां प्रगुणा तदन्यैर्वा पर्यनुयुक्तया पृष्टया सत्या परिषदा[7] प्राश्निकैर्वक्तव्यमित्यर्थः। च शब्दोऽवधारणार्थः। एतदेव (? एवमेव) अन्यानि निग्रह-स्थानानि वादिप्र(ति)वादिभ्यामेवोद्भाव्यन्ते। एतत्पुनः प्राश्निकैरेव। किं पुनः कार-[8]णं ताभ्यामेव नोच्यत इत्याह। न खलु निग्रहप्राप्तः स्वकौपीनं स्वदोषं विवृणुयात् 80a
(18b10) प्रकाशयेत्। अत्रापीत्याद्याचार्यः। यदि तु न्यायश्चिन्त्यते तदानैकस्यापि[1] जयपराजयौ न्याय्यौ। कथं वादिनो जय इत्याह साधनाभासेन जिज्ञासितस्यार्थस्याप्रतिपादनात्। अत एव न प्रतिवादिनोपि पराजयो वादिविवक्षि[2]तार्थसिद्ध्यपेक्षया प्रतिवादिनः पराजयव्यवस्थापनात्। प्रतिवादिनस्तर्हि किं जय इत्याह (।) भूते दोषानभिधानाच्च (19a1)। अतएव च न वादिनः पराजयस्त[3]द्दूषणापेक्षया तद्व्यवस्थितेः। अथोत्तरपक्षवाद्यनेकदोषसद्भावेपि वादिप्रोक्तस्य साधनस्य कञ्चिद्दोषमुद्भावयति कञ्चिन्न। न तदासौ[4] निग्रहमर्हति। किङकारणमुत्तरस्य प्रतिपत्तेरभिधानादित्यर्थः। पर आह। अर्हत्येव निग्रहं सर्व्वेषान्दोषाणामनुद्भावनात्। आचार्य आह। न खलु[5] भोः सन्त इति कृत्वा सर्व्वे दोषा अवश्यं वक्तव्याः प्रतिवादिना। अवचने वा दोषान्तरस्य निग्रहो भवति नेति वर्त्तते। कस्मात् सर्व्वे दोषा नोद्भाव्यं[6]त इत्याह। एकेनापि (19a2) दोषेणासिद्धत्वादिनोद्भावितेन न तस्य वादिप्रयुक्तस्य साधनस्य विघातात्। साध्यसिद्धिं प्रत्यसमर्थत्वप्रतिपादनादित्यर्थः। भाव[7]साधनो वा साधनशब्दः। अत्रैव दृष्टान्त-

प्येकेनैव साधनेन तन्निष्ठेन सत्त्वोपादानमिति । न दोषमुद्भाव(य)-न्नेवापरस्यानुद्भावनान्निग्रहार्हः । अथ पूर्वप[3]क्षवादी उत्तरपक्षवादिनं निग्रहप्राप्तं न निगृह्णाति तदा तयोर्न्यायेनैकस्यापि पूर्ववज्जयपराजयौ दोषाभासं ब्रुवाणमुत्तरवादिनं स्वसाधनादनुत्सारयन्न सम[4]र्थितसाधनाङ्गत्वान्न जयो वादिनः । सर्वदोषासम्भवप्रदर्शनेन साधनाङ्गासमर्थनात् । नाप्युत्तरवादिनो उभयदोषाप्रतिपादनात् । तस्मादेवमपि न पर्यनुयोगो[5]पेक्षणं नाम पराजयाधिकरणमिति ॥ ॥

*अस्थाने*[1] *निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः* (न्या०५।२।२२) । निग्रहस्थानलक्षणस्य मिथ्याव्यवसा(या)दनिग्रहस्थाने निगृहीतोसी[6]ति

---

माह । एकसाधनवचनवदिति (19a3) । यथेत्याद्यस्यैव विभागः । एकस्यार्थस्य क्षणिकत्वादेः प्रतिपादनायानेकस्य[8] साधनस्य सत्वकार्यत्वप्रयत्नोत्थत्वादेः सद्भावेपि सत्येकेनैव सत्वादीनामन्यतमेनोपात्तेन तस्य क्षणिकत्वादेरर्थस्य सिद्धेर्निश्चयान्न
81a सर्व्वेषां साधना[9]नामुपादानं । तथैकेनापि दोषेण तत्साधनविघातान्न सर्व्वोपादानमितीदन्दृष्टान्तेन साम्यं । इति तस्मान्नोत्तरपक्षवादी पूर्व्वमेकं दोषमुद्भावयन्नेवापर[1]-स्य दोषान्तरस्यानुद्भावनान्निग्रहार्हः । पूर्व्ववदिति साधनाभासेनाप्रतिपादनात् । भूतदोषानभिधानाच्च ।

ननु च कथन्न वादिनो जयो यावता न तेन साध[2]नाभासः प्रयुक्तः । प्रतिवादी त्वसन्तं दोषमुद्भावयतीत्यत आह । दोषाभासं ब्रुवाणमुत्तरपक्षवादिनं (18a4) स्वसाधनात्सकाशादनुसारयतोऽनिवर्त्तयतस्त[3]दुक्तदूषणाभासत्वेनाप्रतिपादयत इति यावत् । वादिनो न जयः कस्मादसमन्वितसाधनाङ्गत्वात् । असमन्वितसाधनाङ्गं येन तस्य भावस्त[4]त्वं । एतदेव कुत इत्याह (।) सर्व्वदोषाभावप्रदर्शनेन साधनाङ्गसमर्थनात् (19a5) । इत्थम्भूतलक्षणे करणे वा तृतीया (पाणिनि२।३।२९) । असमर्थितत्त्वात् साधना[5]भास एव तेन प्रयुक्त इति संक्षेपार्थः । नाप्युत्तरपक्षवादिनो जय इति वर्त्तते । तस्मादेवमपीति यदि पूर्वपक्षवाद्युत्तरपक्षवादिनं[6] न निग्रहप्राप्तं निगृह्णाति न केवलमुत्तरवादिसम्बन्धेनेत्यपि शब्दः ॥ ० ॥

निरनुयोज्यस्यानुयोगः (19a6) । अनिग्रहप्राप्ते निगृहीतोसीत्यभिधानं । किं[7] पुनरेवं ब्रूत इत्याह (।) निग्रहस्थानलक्षणस्य मिथ्याव्यवसायाद्य (19a6) थोक्तस्य निग्रहस्थानलक्षणस्य सम्यगपरिज्ञानादित्यर्थः । एवञ्चाप्रतिपत्तितो निगृ[8]ह्यते ।

---

[1]अनिग्रहस्थाने—इति न्या० भा० पाठः ।

परं ब्रुवन्निरनुयोज्यानुयोगान्निगृहीतो वक्तव्यः। अत्रापि यदि तत्साधनवादिनमभूतैस्तद्दोषैरुत्तरवाद्यभियुञ्जीत । सोऽस्थाने निर्दोषे निग्रहस्थानस्य नियो[7]क्ताद्भावयिता न भवति । तथा भूतदोष(ो)द्भावनालक्षणस्योत्तरस्याप्रतिपत्तेरितरेणोत्तराभासत्त्वे प्रतिपादितेऽप्रतिभयैव निगृहीत इति नेदमतो निग्रहस्थानान्तरं । अथो[8]त्तरवादिनं साधनदोषमुद्भावयन्तमपरो दोषाभासवचनेनाभियुञ्जीत तस्य तेन भूतदोषत्त्वे प्रतिपादिते साधनाभासवचनेनैव निगृहीत इति । एवम[9]पि नेदं हेत्वाभासेभ्यो 19b
भिद्यते । अवश्यं हि विषयान्तरव्याप्त्यर्थं हेत्वाभासा निग्रहस्थानत्वेन वक्तव्यास्तदुक्तावपरोक्तिरनर्थकेति ॥ ॥

*सिद्धान्तमभ्युपेत्यानियमात् कथाप्रस[1]ङ्गोऽपसिद्धान्तः (न्या० ५।२।*

---

अत्रापीत्याद्याचार्यः। यदि तस्य साधनस्य वादिनमभूतैरलीकैर्दोषैः सव्यभिचारादिदोषदुष्टं त्वया साधनं प्रयुक्तं ततो निगृहीतोसीत्येवम[9]भियुञ्जीत। तदा सोऽस्थानेऽस्य व्याख्यानं निर्दोषनिग्रहस्थानस्य अस्य विभागादेवास्येति। अभियोक्तेत्यस्य विवृतिरुद्भावयितेति। तथा चालीकदोष[1]स्याभिधायित्वे सति दोषोद्भावलक्षणस्योत्तरस्याप्रतिपत्तेरभिधानादप्रतिभयैव करणभूतयोत्तरवादी निगृहीत इति कृत्वा नेदन्निरनुयो[2]ज्यानुयोगाभिधानन्निग्रहस्थानमतोऽप्रतिभानिग्रहस्थानात्सकाशान्न निग्रहस्थानान्तरं। कदा चायमप्रतिभया निगृह्यत इत्याह (।) इतरेण (19a8) वादि[3]ना तदुक्तस्योत्तराभासत्वे प्रतिपादिते अन्यथा न द्वयोरेकस्यापि पूर्ववज्जयपराजयावित्याकूतं। एवं प्रतिवादिसम्बन्धेनास्यापृथग्वच[4]नं प्रतिपाद्य वादिसम्बन्धेनाप्याह (।) अथोत्तरवादिनं भूतं सत्यं साधनदोषं सव्यभिचा(रा)दिकमुद्भावयन्तमपर इति पूर्वपक्षवादी दोषाभा[5]सवचनेनाभियुञ्जीत। जात्युत्तरमनैकान्तिकाद्याभासं त्वया प्रयुक्तं। तस्मान्निगृ(ही)तोसीत्येवं यद्यभियुञ्जीतेत्यर्थः। तदा तस्योद्भावितस्य दो[6]षस्य व्यभिचारादेस्तेनोत्तरवादिना भूतदोषत्वे प्रतिपादिते जात्यु(त्त)रत्वे परिहृत इति यावत्। साधनाभासवचनेनैव वादी निगृह्यते इति॥ तस्मादेवमपि प्र[7]तिवादिसम्बन्धेनापि नेदं हेत्वाभासेभ्यो भिद्यत इति पृथग्वाच्यं। अस्यैवोपोद्बलनमवश्यं हि द्वाविंशतिनिग्रहस्थानवादिना हेत्वाभासाः पृथग् निग्रहस्था[8]नत्वेन वक्तव्याः। किमर्थमित्याह। विषयान्तरप्राप्त्यर्थं (19b1) निरनुयोज्यानुयोगादिभिर्निग्रहस्थानैरनाक्रान्तसङ्ग्रहमपीति अन्यथा द्वाविंशतित्वं निग्रहस्था[9]नानामभ्युपगमम्विरुद्ध्यत इत्यभिप्रायः। तथा च तदुक्तौ तेषां हेत्वाभासानां 81b
निग्रहस्थानेनोक्तौ सत्यामपरोक्तिः। अपरस्य निरनुयोज्यानुयोगस्योक्तिर्निर(र्)थका[1] हेत्वाभासवचनेनैव संगृहीतत्वात् ॥०॥

२३ )। कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययात्कथाप्रसङ्गं कुर्वतो ऽपसिद्धान्तो विज्ञेयः। यथा न सतो विनाशो नासदुत्पद्यत इति सिद्धान्तम[2]भ्युपेत्त्य पक्षमवस्थापयति । एकान्त(।) प्रकृतिर्व्यक्ताव्यक्तविकाराणामनुपदर्शनात्। मृदर्थपानां [? न] शरावादीनां दृष्टमेकप्रकृतिकत्वं तथा चायं व्यक्तभेदः। सुखदुःखमोहसम[3]न्वितो गृह्यते तत्सुखादिभिरेकप्रकृतिरिति । स एवमुक्तवान् पर्यनुयुज्यते । अथ प्रकृतिर्विकार इति कथं लक्षयितव्यं (।) यस्यावस्थितस्य धर्म्मान्तरनिवृत्तौ[4] धर्म्मान्तरं प्रवर्त्तते

---

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति (19b1) सूत्रं सिद्धान्तमभ्युपेत्य पक्षपरिग्रहं कृत्वाऽनियमात् पूर्वप्रकृतार्थोपरोधेन शास्त्रव्यवस्थामनादृत्येति यावत्। कथाप्रसङ्गोऽर्थान्तरोपवर्णनं। कस्यचिदर्थस्येति धर्मिणो धर्मान्तरं प्रतिज्ञाय प्रतिज्ञातार्थ[3]विपर्ययो विरोधः। इदं उदाहरणेन स्पष्टयति । यथा न सतो वस्तुनो विनाशो (19b2) निरन्वयः केवलं तिरोभावमात्रं भवति नासत् खरविषाणतुल्यमु[4]त्पद्यते। किन्तर्ह्याविर्भावतः। सदेवोत्पद्यत इत्येवं कापिलः सिद्धान्तव्यवस्थामादर्श्य पक्षङ्करोति। एका प्रकृतिर्व्यक्तस्याव्यक्तलक्षणा। व्यक्तस्येति म[5]हदादेः। अत्र हेतुमाह विकाराणां शब्दादीनामन्वयदर्शनात् । मृदन्वयानामित्यादिदृष्टान्तः। तथा चायमित्युपनयनः [? पनयः]। सुखदुःखमोहसमन्वित (19b3) इति[6] सुखादिमयत्वं दर्शयति। दर्शितञ्च सुखादिमयत्वं व्यक्तस्य पूर्वं यथासांख्येनाभिमतं। तत्तस्मात् सुखादिभिरेकप्रकृतिरित्ययं व्यक्तभेदः। इति निगमनं[7] सुखादिभिरितीत्थंभूतलक्षणे तृतीया। सुखादिप्रकारा सुखादिलक्षणा। एका प्रकृतिरस्येत्यर्थः। अन्ये पठन्ति। एका प्रकृतिर्व्यक्ता व्यक्तविकाराणामन्वयद[8]र्शनादिति।
82a एवञ्च व्याचक्षते। एका प्रकृतिरभिन्ना सर्व्वात्मस्वभावा व्यक्ताव्यक्तविकाराणामन्वयदर्शनात्। ये व्यक्ता विकारा महदादयो ये चाव्यक्ताः प्रधानात्मनि व्यवस्थितास्तेषा[1]मप्यन्वयदर्शनादिति। अपरे तु पठन्ति। एका प्रकृतिरव्यक्ता। व्यक्तविकाराणामिति व्यक्तरूपाणां विकाराणामिति चाहुः। प्रकृतार्थविपर्य(ये)णेयं यथा प्रवृत्तेति प्रदर्शना[2]र्थमाह (।) स कापिल एवमुक्तवान्पर्यनुयुज्यते (19b4)। अथ प्रकृतिर्विकार इत्येतदुभयङ्कथं लक्षयितव्यं। प्रतिपत्तव्यमिति। स एवमनुयुक्तः प्राह। यस्यावस्थितस्य धर्मान्तरनि[3]वृत्तौ धर्मान्तरम्प्रवर्त्तते सा प्रकृतिरवस्थितरूपा। यत्तत्प्रवृत्तिनिवृत्तिसद्धर्मान्तरं स विकार इति लक्षयितव्यं। परमुक्तवान् साङ्ख्यः प्रकृतार्थपरित्यागदो[4]षेणोपपाद्यते। सोयम्वादी प्रकृतार्थविपर्ययादनियमात् कथाम्प्रसञ्जयति। पूर्व्वप्रकृतं परित्यजतीत्यर्थः। कथमित्याह

सा प्रकृतिः। यत्तद्धर्म्मान्तरं स विकार इति सेयं प्रकृतार्थविपर्यया-
दनियमात् कथां प्रसज्जयति। प्रतिज्ञातञ्चानेन नासदाविर्भवति[5] न
सत्तिरोभवतीति सदसदतोश्च तिरोभावाविर्भावावन्तरेण न कस्यचित्प्र-
वृत्त्युपरमः प्रवृत्तिर्वेत्येवं प्रत्यवस्थिते यदि सत आत्महानमसत-
श्चात्मलाभ[6]मभ्युपैत्यपसिद्धान्तो भवति। अथ नाभ्युपैति पक्षोऽस्य न
सिध्यतीति। इहापि न कश्चिदनियमात्कथाप्रसङ्गः। यत्तेनोपगतन्नास-
दुत्पद्यते न सद्विनश्यतीति तस्य समर्थ[7]नापदमुक्तमेकप्रकृतिकमिदं
व्यक्तमनुपदर्शनादिति । तत्रैका प्रकृतिः सुखदुःखमोहस्तदविभक्तयो-

---

(1) प्रतिज्ञातं खल्वनेनेति(19b5)पूर्वोक्तं स्मर[5]यति। यद्येवङ्को दोष इत्याह।
सदसतोरित्यादि। सतस्तिरोभावमेकान्तेन विनाशमन्तरेण न कस्यचिद्धर्मस्य
प्रवृत्युपरमः सिध्यति। केन चिद्विरूपे[6]णावस्थाने सति स तिरोहितोऽङ्गस्तस्या-
वस्थितस्यात्मभूतः परभूतो वा भवेत्। आत्मभूतत्वे तिरोहितादव्यतिरेकात्
तिरोहितवदवस्थितस्याप्यनवस्थानं[7] अवस्थितवच्च तदव्यतिरेकतस्तिरोहितस्या-
प्यवस्थानमासं[?शं]क्यते। परभूतत्वेपि कथमनन्वयो न विनाशो न ह्यन्यस्या-
वस्थानेऽन्यदवतिष्ठते। अन्यो वान्यस्यान्वयश्चैतन्यस्याऽ[8]पि घटान्वयप्रसङ्गात्। तथा
नासत आविर्भावमुत्पादमन्तरेण कस्यचिद्धर्मस्य प्रवृत्तिर्वा सिध्यति।

ननु च विद्यमानमेव धर्मान्तरमाविर्भाव्यते। ग्रहणविषयभा[9]वमापाद्यते। 82b
न विद्यमानस्य क्रियास्त्युपादानमिति उपलब्धिर्वा विद्यमानत्वात्। न कारक-
जन्यत्वमित्येवं प्रत्यवस्थितः प्रतिषिद्धः साङ्ख्यः। क्वचित् सप्तम्यापद्यते। तत्र
प्रत्य[1]वस्थिते प्रतिवादिनि सतीति व्याख्येयं। यदि स कापिलः सतो धर्मस्यात्म-
हानमसतश्चात्मलाभमभ्युपैति तदानीमपसिद्धान्तो भवति। अभ्युपगमविरुद्धस्य
प्रतिज्ञा[2]नादपसिद्धान्तसंज्ञकं निग्रहस्थानमस्य भवतीत्यर्थः। अथ सत आत्म-
हानमसतश्चात्मलाभन्नाभ्युपैति। एवमप्येकप्रकृतिर्विकाराणामिति योयं पक्षः
पूर्व्वप्रतिज्ञातः सोस्य[3]न सिध्यति प्रकृतिविकारलक्षणस्यानवस्थितत्वात्। तथा हि
तयोर्लक्षणं यस्यावस्थितस्येत्यादिनोक्तं। तस्य चायोगः। सदसतोश्चे (19b6)
त्यादिना प्रतिपा(दि)दत इत्येतावा[4]न्परग्रन्थः। अत्र सम्प्रत्याचार्यः प्रतिविधत्ते।
इतोपि प्रतिविदध्मह इति शेषः। न कश्चिदनियमात् सिद्धान्तनीतिविरोधात्
साङ्ख्यस्य प्रसङ्गः। तस्माद्यत्तेनोपग[5]तं नासदुत्पद्यते न स(त्)तिरोभवतीति
तस्य समर्थनायेदमुक्तं। किमुक्तमित्याह (1) एकप्रकृतिकमिदं व्यक्तमन्वय-
दर्शनादिति (19b8)। तत्रैकेत्येतदेव विभजति। तदवि[6]भक्तयोनिकमिदं

निकमिदं व्यक्तं तदन्वयदर्शनात्। व्यक्तस्य तत्स्वभावताऽभेदोप[8]लब्धि-
रिति। सुखादीनामुत्पत्तिविनाशाभ्युपगमाभावात् सर्वस्य तदात्म-
कस्य नोत्पत्तिविनाशाविति सिद्धं भवति। अत्र तदुक्तस्य हेतोर्दोषमनुभाव्य
20a विकारप्रकृतिलक्षणं[9] पृच्छन् स्वयमयं प्रकृता (?) सत्त्वेनानियमात्
कथां प्रवर्त्तयति। तत्रेदं स्याद्वाच्यं व्यक्तं नाम प्रवृत्तिनिवृत्तिधर्म्मकं न
तथा सुखादयः। व्यक्तस्य सुखाद्यन्वये सुखादिस्वभावता प्रवृत्तिनि[1]-
वृत्तिधर्म्मतालक्षणमवहीय(ते) इति। न तद्धितसुखादिस्वभावता-
व्यक्तलक्षणविरोधादिति। सुखाद्यन्वयदर्शनादित्यसिद्धो हेतुरिति। एवं हि

---

व्यक्तं। ते सुखादयोऽविभक्ताः अपृथग्भूता योनिः स्थानमधिकरणं यस्य
व्यक्तस्य तत्तदविभक्तयोनिकं किङ्कारणं तदन्वयदर्शनात्। तै(:) सुखादिभि-
[7]रन्वयदर्शनात् तादात्म्योपलम्भात्। ततः किं सिद्धमित्याह व्यक्तस्य तत्स्व-
भावता सुखादिस्वभावता। तत्र स्वभावतैव कथन्निश्चितेत्याह। अभेदोपलब्धे
(19b8)रिति। सुखादिभिः[8] शब्दादीनामनानात्वदर्शनादिति यावत्। एवमपि
किं सिद्धम्भवतीत्याह। सर्व्वस्य (19b9) शब्दादेर्विकारग्रामस्य सुखाद्या-
83a त्मकस्य नोत्पत्तिविनाशाविति सम्भवति। कस्मादि[9]त्याह (।) सुखादीनामुत्पत्ति-
विनाशाभावात्। सुखाद्यव्यतिरेकात्तदात्मवच्छब्दादयोपि नित्याः सिद्धा भवन्ति।
तथा च यत्पूर्व्वमभ्युपगतं न श(?स)तो विनाशो नासदुत्पद्यत इति। तत्समर्थि[1]तं
भवति। अत्रैवं कापिलेन स्वोपगमे समर्थिते सति तदुक्तस्य तेन साङ्ख्येनोक्तस्य
हेतोरन्वयदर्शनस्य दोषमसिद्धतादिकमनुद्भाव्य स एवमुक्तवान् पर्यनुमुज्यते।
अथ प्र[2]कृतिर्निर्विकार इति कथं लक्षयितव्यमित्येवं विकारप्रकृत्योर्लक्षणं पृच्छन्
स्वयमयमक्षपादः प्रकृतासम्बन्धेनानियमात् प्रकृतार्थोपरोधात् कथाम्प्रवर्त्त[3] यति।
यस्मात् प्रकृतिविकारयोरिह लक्षणं न प्रकृतमेव तत्किन्तदभिधाय पर्यनुयुज्यते
तस्मादप्रस्तुतपर्यनुयोक्तृत्वादक्षपाद एव निग्रहार्ह इति[4] भावः। किन्तर्ह्यत्रोत्तरसम्बद्ध
वाक्यमित्याह (।) तत्रान्वयदर्शनहेताविदं स्याद् वाच्यं (20a1)। व्यक्तन्नाम प्रवृत्ति-
निवृत्तिधर्मकं न तथा व्यक्तवत् सुखादयः प्रवृत्तिनि[5]वृत्तिधर्मका इति लिङ्गवचन-
परिणामेन सम्बन्धः। तथा च व्यक्तस्य सुखाद्यन्वयेऽस्य व्याख्यानं सुखादिस्वभाव-
तायां सत्यां प्रवृत्तिनिवृत्तिधर्मतालक्ष[6]णं व्यक्तस्यावहीयते। तदव्यतिरेकेण तेषा-
मपि सदावस्थानात्। इति तस्मान्न तद्रहितसुखादिस्वभावता व्यक्तस्य। ताभ्या-
म्प्रवृत्तिनिवृत्तिभ्यां रहितास्तथोक्तास्ते च सु[7]खादयश्च। ते स्वभावो यस्य तस्य
भावस्तद्रहितसुखादिस्वभावता। कस्मादित्याह (।) व्यक्तलक्षणविरोधादि(20a2)-

तस्य साधनदोषोद्भावनेन पक्षो दू[2]षितो भवति । सोऽनुपसंहृत्य साधनदोषकथां प्रतारयन् स्वदोषं परत्रोपक्षिपति । अयमेव दोषोऽनेन प्रकारेणोच्यत इति चेत् । एष नैमित्त [ ? त्ति ]कानां विषयो न लोकः[3] शब्दैरप्रतिपादितमर्थं प्रतिपत्तुं समर्थ इति । स एवायं भण्डालेख्यधि- [ ? भण्डालेख्य ] न्यायः । अत्रापि यथोक्तेन न्यायेन पूर्वकस्यासाधनाङ्ग-

---

ति व्यक्तस्य लक्षणं प्रवृत्तिनिवृत्तिधर्मकत्वं तस्य तद्विपरीतः ।[8] सुखादिभिः परस्पर-
परिहारस्थितिलक्षणो विरोधः । तथा च साधनन्न सदावस्थितरूपसुखादिस्वभाव-
मिदं ते व्यक्तं प्राप्नोति तद्विपरीतधर्मत्वात् । क्षेत्रज्ञवत्[9] न च सुखादिव्यक्तयोरेक- 83b
स्वभावता । परस्परविरुद्धधर्माध्यासितत्वात् । सत्त्वरजस्तमसामिव चैतन्यानामिव
वा । एवञ्च व्यक्तस्य सुखादिस्वभावतायोगे सुखाद्यन्वयदर्शन[1]सिद्धो हेतुः । कस्मा-
दिदं सम्बद्धं दूषणमित्याह । एवं हि तस्य साङ्ख्यस्य साधनदोषोद्भावनेन हेत्वसि-
द्धताचोदनेनैकप्रकृतीदं व्यक्तमित्ययं पक्षो दूषितो भवनि (2023) । स पु[2]नर्नैयायिकः
साधने दोषमसिद्धताख्यमनुपसंहृत्यापदर्श्य अप्रकृतप्रकृतिविकारलक्षणपर्यनुयोगेन
कथां प्रतानयत्यविमुञ्चं स्वदोषमन्यमात्कथा[3]प्रसङ्गं परत्र साङ्ख्ये तपस्विन्यु-
पक्षिपति । पर आहायमेवासिद्धताख्यो दोषोनेन प्रकारेण प्रकृतिविकारलक्षण-
पर्यनुयोगद्वारेणास्माभिरप्युच्य[4]त इति । आचार्य आह । एष नैमित्तिकानां (2023)
ज्योतिर्ज्ञानविदां विषयः । नायं त्वदुक्तस्य वाक्यस्यार्थं इति यावत् । यतो न लोकः
शब्दैरप्रतिपादितमर्थं प्रति[5]पत्तुं समर्थः अर्थप्रकरणादिभिर्विनेत्यध्याहारः । तस्मात् स
एवायं (2024) प्रतिज्ञाविरोधप्रस्तावे निर्दिष्टो भण्डालेख्यन्यायोत्राप्यपसिद्धान्तो
न केवलं तत्रेत्यऽ[6]पि शब्दः । यथा हि भण्डाः प्राकृतान् विस्मापयन्तः शीघ्रमर्द्धचन्द्रा-
काराममल्पीयसीं रेखामालिख्य भणन्ति पश्यत तालमात्रेण हस्ती विलिखितोस्माभि-
रिति तत्र केचि[7]त् मन्दमतयस्तथैव प्रतिपद्यन्ते । केचिद् दुर्विदग्धधियः पर्यनुयुञ्जते ।
ननु नोस्य कर्ण्णपाददन्तादयः प्रतीयन्ते तत्कथमयन्तद्विकलो हस्ती भवतीति । ते पु
नराहु[8]ः । सत्यं न प्रतीयन्ते । अस्माभिस्तु समाप्तसकलकलः करेणुरयं लिखितः ।
तास्तस्य सकलाः कलाः सलिल इव मग्नत्वान्नोपलभ[?भ्य]न्ते कुम्भकदेशमात्र-
न्त्विदमस्योप[9]लभ्यत इति तथाजातीयकमेतत् परस्यापि धाष्टर्चविजृम्भितं । यदि 84a
नाम नायमर्थोस्माद् बाह्यात् प्रतीयते तथाप्यनेन प्रकारेणोच्यत इति । अपि चोच्य-
ताम[1]यमेवार्थोनेन प्रकारेण तथाप्यसिद्धस्य हेत्वाभासेष्वन्तर्भावात् तद्वचनेनैवा-
भिधानमिति नापसिद्धान्तः पथगुपादेयो भवेदित्येतदुपसंहारव्याजेनाह । यथो[2]क्तेन
न्यायेने (2024) त्यादि ॥०॥

स्यासिद्धस्य हेतोरभिधाना[4]देव निग्रहो नापि नियमात्कथाप्रसङ्गादिति । इदमपि हेत्वाभासेष्वन्तर्भावान्न पृथग्वाच्यं ॥ त् ॥

*हेत्वाभासाश्च यथोक्ताः* (न्या० ५।२।२४) । हेत्वाभासाश्च निग्रहस्थानानि[5] किम्पुनर्लक्षणान्तरयोगाद्धेत्वाभासा निग्रहस्थानभावमापद्यन्ते । यथा प्रमाणानि प्रमेयत्वमित्यत आह । यथोक्तहेत्वाभासलक्षणेनैव निग्रहस्थानता[6] च इति । अत्रापि यथोक्तत्त्वादिद (?) मेव किन्ते यथालक्षितप्रभे-

---

हेत्वाभासाश्च यथोक्ता इति सूत्रं । इदमाक्षेपपूर्वकं वात्स्यायनो व्याचष्टे । किं पुनरिति (20a6) हेत्वाभासलक्षणाद्यदन्यल्लक्षणं तेन सम्बन्धा[3]न्निग्रहस्थानत्वमापद्यन्ते । किमिवेत्याह । यथा प्रमाणानि प्रमेयत्त्वं लक्षणान्तरवसा [? वसा]दापद्यन्त (20a6) इति वर्त्तते तानि हि प्रमिति क्रियाया (:) कारणत्वात् । प्रमा[4]णानि प्रमाणान्तरेण तु यदा प्रमीयन्ते तदा कर्मत्वात् प्रमेयानि । तत एव पदार्थत्वात् प्राप्तः संशयः । अत्राह मुनिना यथोक्त इति । अस्यैव विवरणं ।[5] यथोक्तहेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति । इदमुक्तम्भवति । सव्यभिचारविरुद्धप्रकरणस (म) साध्यसमातीतकाला (न्या० सू० १।२।४) इति हेत्वाभासा इति प्र[6]भेदमुपक्रम्य यत्प्रत्येकं लक्षणमुक्तं । अनैकान्तिकः सव्यभिचारः (न्या० सू० १।२।५) सिद्धान्तमभ्युपेत्य तद्विरोधाद्विरुद्धं (न्या० सू० १।२।६) । यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरण[7]समः (न्या० सू० १।२।७) साध्याविशिष्टः साध्यत्वात् साध्यसमः (न्या० सू० १।२।८) कालात्ययापदिष्टः कालातीत (न्या० सू० १।२।९) इति तेनैव लक्षणेनैषान्निग्रहस्थानत्वं न पुनस्तत लक्षणान्तरमपेक्ष्यत इति । अत्रापी[8](20a7)त्याचार्यः । कथञ्चिन्त्यमित्याह । किन्ते यथा भवद्भिर्लक्षितप्रभेदास्तथैव ते भवन्त्याहो स्विदन्यथेति (20a7) । लक्षितः प्रभेदो येषामिति विग्रहः । तर्त्ताह किन्त (द्)

84b चिन्त्यत इत्याह[9] तत्तु चिन्त्यमानमिहातिप्रसज्यत इति न प्रतन्यते । इदमेवाभूरितं । विदन्त्येव केचिदत्र हेत्वाभासा एव न युज्यंते केचित्तु हेत्वाभासा अपि न लङ्गहीता इत्यस्मिंश्च विचारे हेत्वाभास[1]वार्त्तिकं सकलमवतारयितव्यमिति शास्त्रान्तरमेव भवेत् । अवदातमतयस्त्वस्मद्विहितहेत्वाभासलक्षणविपर्ययेण दूरान्तरत्वात्तद् वैसदं (?) । तस्मादुपेक्षै[2]व युज्यत इति । तथापि मन्दमतिविबोधनायापि शास्त्रमुच्यत इति । कालातीतप्रकरणसमयोस्तावद्धेत्वाभासत्वं यथा नोपपद्यते तथा वर्ण्यते । तत्र कालात्ययापदि[3]ष्टः कलातीतः तदिह (।) बृद्धनैयायिकानामपास्य मतमाचार्यदिङ्नागपादैर्भाषितत्वादिदानीन्तना वात्स्यायनादयोमुमेव स्थिपक्षमाहुः । तत्रैवम्ब्रूमः ।[4] कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः

कालातीत इत्युच्यते। निदर्शनं (।) नित्यः शब्दः संयोगव्यंग्यत्वाद्रूपवत्। प्रागूर्ध्वं[5] च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते। तथा शब्दो व्यवस्थितो भेरीकर्ण्णसंयोगेन दारुपर्णयोगेन वा व्यज्यते। तस्मात्संयोगव्यंग्यत्वान्नित्यः[6] शब्द इति। अयमहेतुः कालात्ययापदेशात् व्यंजकस्य संयोगस्य कालं न व्यंग्यस्य रूपस्य व्यक्तिरत्येति सति प्रदीपसंयोगे रूपस्य ग्रहणं भवति। न निवृत्तसंयोगे[7] रूपङ्गृह्यते। निवृत्ते तु दारुपर्णसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले नेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति संयोगनिमित्ता भवति। कारणाभावाद्धि कार्या[8]भाव इति। नन्वयमनैकान्तिक एव। संयोगव्यंग्यत्वादिति। अनित्यमपि संयोगेन व्यज्यमानं दृष्टं यथा घट इति। न। संयोग व्यंग्यत्वेनावस्थानस्य साध्यत्वान्न ब्रूमो[9] 85a
नित्यः शब्द इति। अपि त्ववतिष्ठते शब्द इत्ययं प्रतिज्ञार्थस्तदा च संयोगव्यंग्यत्वादित्ययं हेतुरनैकान्तिको न ह्यनवस्थितं किञ्चित्संयोगेनाभिव्यज्यमान(ः) कथमिति[1] तदनेन प्रकारेण संयोगव्यङ्ग्यत्वमेव शब्दस्य प्रतिषिद्धयत इति नायमसिद्धाद् व्यावर्तते। अन्यथानेयं शब्दस्य व्यक्तिः संयोगिकालमत्येतीति न संयोगनिमित्ता[2] भवतीति। वचनस्य कोर्थ इति वक्तव्यं। स्याद् बुद्धिः सर्वदाधर्मिण्यविद्यमानस्यासिद्धत्वं। अयन्तु न सर्वथा धर्मिण्यसिद्धो येनोत्पत्तिकाले संयोगव्यङ्ग्यत्वमस्ति। न[3] तूपलब्धिकाल इति। तदुक्तं। एकदेशासिद्धस्यापि असिद्धत्वदपरिज्ञानात्। यथा नित्याः परमाणवो गन्धवत्वात्। श्वेतनाश्च तरवः स्वापादिति। यश्चा[4]नित्यः शब्द इति प्रतिजानीते स कुठारदारुसंयोगादेः शब्दस्योत्पत्तिमेव प्रतिपद्यते। न पुनरवस्थितस्याभिव्यक्तमिति व्यक्तमस्यान्यतरासिद्ध[5]त्वं। अथ संयोगे सत्युपलब्धेरिति हेत्वर्थाभ्युपगमान् नायमसिद्धो हेतुरिति समाधीयते। तथापि तैलतेजोवर्त्तिसंयोगे कुलालमृत्पिण्डदण्डसं[6]योगे च सति दीपघटादयः समुपलभ्यन्ते। न च तेषान्तत्र संयोगाप्राप्त्यवस्थानमित्यनेनानैकान्तिक एव प्राप्नोतीति न कालातीतः। तदुत्तरकालमप्यवस्थाने साध्ये[7] समुदायान्तरव्यय(?)वादिनो विरुद्धः। सपक्षाभावादेव तत्र वृत्तेरभावात्। क्षणस्थितिधर्मवति च धर्मिणि। रूपादिके विद्यमानत्वात्। स्थिरभाववादिनन्तु प्रति[8]प्रतिबन्धवैकल्यं साधनवैफल्यञ्च। अनङ्गीकृतसिद्धान्ते तु न्यायवादिनि प्रतिवादिनि पूर्वपक्षप्रतिपादितो दोष इति। एवमुदाहरणान्त[9]रेपि दूषणमुत्प्रेक्ष्य वक्तव्यमिति॥०॥ 85b

यस्मात्प्रकरणचिन्ता स निर्ण्णयार्थमपदिष्टः प्रकरणसमः।(न्या० सू० १।२।७) विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणन्तस्य चिन्तामविमर्शात् प्रभृति प्राङ्निर्ण्णयात् परीक्षणं सा यत्र कृता स निर्ण्णयार्थं प्रयुक्तोभयपक्षसाम्यात् प्रकरण[2]मनतिवर्त्तमानः प्रकरणसमो न निर्ण्णयाय कल्प्यते। कस्मात्पुनः प्रकरणचिन्ता तत्वा-[1]पलब्धेः। यस्मादुपलब्धे तत्वेर्थे निवर्त्तते चिन्ता तस्मात्सामान्येनाधिग[3]तस्य या

विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयतीति। उदाहरणमनित्यः शब्दो
नित्यधर्मानुपलब्धेः। अनुपलभ्यमाननित्यधर्मकमनित्यन्दृ[4]ष्टं स्थाल्यादि। यत्र
समानो धर्मः संशयकारणहेतुत्वेनोपादीयते संशयसमः सव्यभिचार एव। या तु
विमर्शस्य विशेषापेक्षतोभयपक्षविशेषानु[5]पलब्धौ सा प्रकरणम्प्रवर्तयति। यथा
च शब्दे नित्यधर्मो नोपलभ्यते तथानित्यधर्मोपि। सेयमुभयपक्षविशेषानुपलब्धिः
प्रकरणचिन्ताम्प्रयो[6]जयति कथम्विपर्यये प्रकरणनिवृत्तेः। यदि नित्यधर्मः शब्दे
गृह्येत न स्यात्प्रकरणं। यदि (न) नित्यधर्मो गृह्येत एवमपि निवर्त्तते प्रकरणं। सोयं
हेतु[7]रुभौ पक्षौ प्रवर्त्तयन्नान्यतरस्य निर्णयाय कल्प्यत इति। न त्वयं साध्या-
विशिष्ट एव। नाविशिष्टः। तस्यैव प्रकरणप्रवृत्तिहेतोर्द्धर्मस्य हेतुत्वेनोपादानात्।
यत्र[8] साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः। यत्र पुनः प्रकरण-
86a प्रवृत्तिहेतुरेव स प्रकरणसम इति। अत्रापि नित्यानित्यधर्मानुपलम्भद्व[9]यादेव
प्रकरणचिन्ता। न त्वेकस्मात्। विपर्यये प्रकरणनिवृत्तिरिति वचनात्। तद्यदि
नित्यानित्यधर्मानुपलब्धेरिति हेतुः स्यात्। स्यात् प्रकरणसमः। तदेकधर्मानु[1]प-
लब्धेस्तूपादाने कथं प्रकरणसम इत्यभिधानीयं। उभयधर्मानुपलम्भोपादानेपि
सपक्षविपक्षयोरनुवृत्तिव्यावृत्योरनिश्चयादसाधरणानैकान्तिको[2] भवतीति कथ-
मस्य हेत्वा(भा)सान्तरत्वं। भवतु नामैकधर्मानुपलब्धिरेव हेतुः प्रकरणसमः।
तथापि नित्यशब्दवाद्यवश्यमेव व्यामोहान्नित्यधर्मान् प्रतिपद्यत[3] इति प्रतिवाद्य-
सिद्धीयं भवति। अथ प्रमाणेन नित्यधर्म्मप्रतिक्षेपान्नित्यधर्मानुपलब्धिः प्रति-
पाद्यते। तदापि निश्चायकत्वात् सम्यग्ज्ञानहेतुरेवायं[4] इति कथं हेत्वाभासः प्रक-
रणसमः। तदा हि विशेषोपलब्धिरेव हेत्वर्थो व्यवतिष्ठते। विशेषाश्च नित्यस्य
कृतकत्वादयः। न च तत्कृता प्रकरणचिन्ता[5] विपर्यये प्रकरणनिवृत्तेरिति वचनात्।
अपि च नित्यधर्मानुपलब्धेरिति किमयं प्रसज्यप्रतिषेधः किम्वा प्रतियोगिविधानं(।)
यदि प्रसज्यप्रतिषे[6]धस्तदा प्रमेयत्वादिवत् साधारणानैकान्तिकोयं नित्यधर्मोप-
लब्धिः प्रतिषेधमात्रस्यानित्यत्वरहितेष्वसत्स्वपि सम्भवात्। अथ प्रतियोगि-
विधानन्तदाप्यनन्तरो[7]दितया युक्त्या हेतुप्रतिरूपत्वायोगः। अन्यस्त्वन्यथेदं सूत्र-
द्वयं व्याचष्टे। यो हेतुर्हेतुकालेऽपदिष्टोऽत्येत्यपैति। कस्मादपैति। प्रत्यक्षेणाग-
मेन उभयेन वा[8] पीड्यमानः स कालमतीत इति कालातीत इत्युच्यते। कुतः पुनः
प्रत्यक्षागमविरोधो लभ्यत इति चेत्। चतुर्लक्षणो हेतुरिति वचनात्। तथाहि
86b पूर्ववच्छेष[9]वत्सामान्यतो दृष्ट(न्या० सू० १।२।५)ञ्चेत्यत्र चतूरूपो हेतु-
रिष्टः। पूर्ववन्नाम साध्ये व्यापकं। शेषवदिति तत्समानेस्ति। सामान्यतश्च दृष्ट-
ञ्च शब्दादविरुद्धञ्चेति। तथा भाष्यवचनमप्यस्ति।[1] "यत्पुनरनुमानं प्रत्यक्षा-
गमविरुद्धं न्यायाभासः स" इति। तदेवं त्रैरूप्ये सति प्रत्यक्षागमाभ्यां यो वाध्यते

दास्तथैवाहो( स्वि )दन्यथै( वे )ति । तत्ते चिन्त्यमानमिहातिप्रसज्यत

स कालात्ययापदिष्टः। स च त्रिधा भिद्यते प्रत्यक्षविरुद्ध आ[2]गमविरुद्ध उभयविरुद्धश्चेति (।) प्रत्यक्षविरुद्धो यथा अनुष्णोग्निर्द्रव्यत्वादुदकवत्। आगमविरुद्धो यथा ब्राह्मणेन सुरा पातव्या द्रवत्वात् क्षीरवत्। उभयविरुद्धो यथाऽ[3]रश्मिवच्चक्षुरिन्द्रियत्वाद् घ्राणादिवदिति। न चायं किल पक्षविरोधः पक्षविरोधस्य प्रतिक्षेपादिति। तदेतत् त्रैरूप्यलक्षणानवबोधवैशद्यं (।) त्रैरूप्यं हि यदा[4] स्वं प्रमाणैः परिनिश्चितं पक्षधर्मत्वादिकं त्रयं च यत्र बाधा तत्र प्रतिबन्धोस्ति। बाधाविनाभावयोर्विरोधात्। अविनाभावो हि सत्येव साध्यधर्मे हेतोर्भावः[5] कथञ्चासौ तल्लक्षणो धर्मिणि हेतुः स्यान्न चात्र साध्यधर्म इत्यादिकमत्राबाधितविषयत्वदूषणानुसारेण वक्तव्यं। यत्र पुनरियं बाधोदाहृता न[6] तेषां त्रैलक्षण्यं मनागप्यस्ति प्रतिबन्धवैकल्यात्। अभ्युपगतपक्षप्रयोगस्य च पक्षदोष एवायं युक्तः। यत्पुनः पक्षदोषत्वपरिहाराय बह्वसम्बद्धमुद्ग्राहि[7]तं तदत्यन्तमसारमिति नेहावलीयते ॥०॥

यस्मात्प्रकरणचिन्तेति प्रकरणं भाष्ये निरूपितं। तस्योदाहरणं। अणुरण्वन्तरकार्यत्वं प्रतिपद्यते[8] नवेति चिन्तायाङ्कश्चिदभिधत्ते। अणुरण्वन्तरकार्यो रूपादिमत्वात् तद्द्व्यणुकादिवदिति। योसावणोरणुः कारणत्वेनोपादीयते तत्रापि रूपादिमत्वमस्तीति[9] चिन्ता किमियं रूपादिमत्वादण्वन्तरकार्यो न वेति चिन्ता- 87a
याञ्च यदि तस्याप्यण्वन्तरकार्यत्वं रूपादिमत्वादिति वक्ति तदा तस्यापि रूपादिमत्वमस्तीति पुनरपि चिन्ता[1] तदेवमनवस्थारूपं प्रकरणं प्रवर्त्तयतीति प्रकरणसम इत्युच्यते। अथाणुरण्वन्तरकार्यत्वं न प्रतिपद्यते रूपादिमत्वे सति तदानैकान्तिको हेतुरिति तस्माद् भि[2]द्यतेऽनैकान्तिकात् प्रकरणसमः। न चायम्विरुद्धोऽविपर्ययसाधकत्वात्। नासिद्धः पक्षधर्मत्वदर्शनात्। न कालात्ययापदिष्टः प्रत्यक्षागमाभ्यामबाध्यमानत्वात्।[3] अतोऽर्थान्तरमिति। अथवा प्रदेशे करणं प्रकरणञ्चेति कारणसिद्धिरित्यर्थः। प्रदेशे सिद्धिरितीयं चिन्ता यस्माद्धेतोरपदिष्टा भवति स प्रकरणसमः[4] स प्रदेशसाधकत्वात् समः। यथैकदेशेऽसाधकत्वन्तथेतरत्रापीत्यसाधकत्वसामान्यात् समः। तस्मादेकदेशवर्त्ती धर्मः प्रकरणसमः। तद्यथा पृथिव्यप्तेजोवा[5]य्वाकाशान्यनित्यानि सत्तावत्वादिति। अत्रापि यद्यक्षपादमतानुसारी तावदेवं प्रमाणयति। परमाणुः परमाण्वन्तरपूर्व्वको रूपादिमत्वाद् द्व्यणुकादिवदि[6]ति तदा तस्याभ्युपेतविरोध इति नायमतीतकालाद् भिद्यते। अथ बौद्धः करोति। तदापि हेतोरसिद्धिः परमाणूनां रूपादिव्यतिरेकेणानभ्युपगमात्। अयोगाच्च[7] द्व्यदीनाञ्चाभावादुभयविकलो दृष्टान्तः। यदाप्यनपेक्षितसिद्धान्तो न्यायवादी ब्रूते तदापि

द्वितीयपक्षोदितदोषानिवृत्तिरिति नायमसिद्धाद्व्यावर्त्तते । योऽ[8]प्यनुमेयैकदेशवर्त्ती
धर्मः पृथिव्यादीन्यनित्यानि गन्धवत्वादिति अयमप्यपसिद्धान्तान्तर्भूत एवेति न पृथग्वा-
87b च्यः । नासिद्धः पक्षैकदेशधर्मत्वात् । सपक्षैकदेशवर्त्तित्व[9]दिति चेत् विषमोयमुपन्यासः ।
सपक्ष एव च सत्वमित्यत्र हि समुच्चीयमानावधारणमेव न सकलसपक्षधर्मतां
साधनस्य प्रतिपादयति । अनुमेये सत्ववचनं पुनरयोगव्य[1]वच्छेदेन नियन्तृभूतम-
शेषसाध्यधर्मिधर्मतायाः प्रतिपादकमित्यनेनैव पक्षैकदेशासिद्धभेदानामपोहः कृत
इत्यपार्थकं यत्नान्तरमिति यत्किञ्चिदेतत् ॥०॥

भावि[2]विक्तोप्यत्रैव खररवे पतितः । प्रकरणसममन्यथा समर्थयति । यस्मा-
द्धेतो(:) प्रकरणचिन्ता विपक्षस्यापि विचारः पश्चाद् भवति स एवं लक्षणो
हेतुनिर्णयाय योपदिश्यमानः प्र[3]करणसमो भवति । प्रकरणे साध्ये समस्तुल्यः
सत्त्वे ऽसत्त्वे वा यथा सत्सर्वज्ञमितरतद्विपरीतविनिर्मुक्तत्वाद् रूपादिवदिति ।
यस्मादयं हेतुरुभयत्र समानो योप्यस[4]त्त्वं साधयति तस्यापि समानः । कथमसत्स-
र्वज्ञत्वमितरतद्विपरीतविनिर्मुक्तत्वात् खरविषाणवदिति । न चायं किलोभयधर्म-
त्वेप्यनैकान्तिको विपक्षवृत्तिर्वैकल्या[5]त् । तदिदमाचार्येण स्वयं प्रमाणविनिश्चये*
प्रतिसि[?षि]द्धं । कम्पुनरत्र भवान् विपक्षं प्रत्येति साध्याभावं । कथमिदानीं
हेतुं विपक्षवृत्तिरुभयधर्मेणैवेत्यादिना । अर्थग्रहण[6]व्याख्याने च यदुक्तं
तदत्रापि वक्तव्यं । विशेषेण दूषणञ्चास्य प्रपञ्चेनोक्तमेव । एवं प्रकरणसमातीत-
कालयोरनुपपत्तिः । साध्यव्यभिचारस्य तु युज्यते हेत्वाभासत्वं[7] न तु यथा भवता-
मभ्युपगमः । तथा हि भवन्तः सन्दिग्धविपक्षव्यावृत्तिकस्यानैकान्तिकत्वं न प्रति-
पद्यन्ते । अदर्शनमात्रेणैव व्यतिरेकसिद्ध्यभ्युपगमात् । अत एव च भवद्भि[8]रुप-
गतस[?श]ङ्करैरेवं प्रयुज्यते प्राप्यकारिणी चक्षुःश्रोत्रे बाह्येन्द्रियत्वात् घ्राणादिवत् ।
सविकल्पं प्रत्यक्षं प्रमाणत्वादनुमानवदित्यादि । न चादर्शनमात्रेणैव विना प्रति-
88a बन्धे[9]न व्यतिरेकसिद्धिरिति प्रतानितमन्यत्र ।

आत्ममृच्चेतनादीनां यो भावस्याप्रसाधकः ।
स एवानुपलम्भः किं हेत्वभावस्य साधक (४५) इत्यादिना ।

तथा सपक्षविपक्षयोः सन्दि[1]ग्धः सदसत्वस्यापि सम्यग्ज्ञानहेतुत्वमेव युष्माभि-
रिष्यते नानैकान्तिकत्वं यथा सात्मकं जीवच्छरीरम्प्राणादिमत्त्वादिति । अस्य च
तद्भावः प्रतिपादितः प्रमाणविनिश्चया[2]दौ विरुद्धप्रभेदस्तु भारद्वाजविहितः प्रति-

---

*आचार्यधर्मकीर्तिप्रणीतेषु सप्तसु न्यायप्रबन्धेष्वन्यतमो ग्रथः (bStan-ḥgyur, mdo.XCV. 11)

